प्रतिपुरुषं संनिहिताः कृत्यपरा विविध[1]विकरणोपेताः।
वक्तव्यार्थग्राहिण्यः प्रकृतय इव दुर्ग्रहा गणिकाः ॥ ३१७ ॥

( अर्थचतुष्टयमत्र )

सादरमा[2]कृष्य चिरं कुसुमस्तवकं च नरविशेषं च।
रिक्तीकर्तुं निपुणाः क्षुद्राः क्षुद्राश्च चुम्बन्ति ॥ ३१८ ॥
परमार्थकठोरा अपि विषयगतं लोहकं मनुष्यं च।
चुम्बकपाषाणशिला रूपाजीवाश्च कर्षन्ति ॥ ३१९ ॥
पुरुषाक्रांताः सततं कृत्रिमशृंगाररागरमणीयाः।
आहन्यमानजघनाः करेणवो वारयोषाश्च ॥ ३२० ॥
उचितगुणोत्क्षिप्ता अपि पुरतोऽपि निवेशिते सुवर्णलवे।
झगिति पतंति मुखेन प्रकट[3]प्रमदा यथा च तुलाः ॥ ३२१ ॥
बहिरुपपादितशोभा अन्तस्तुच्छाः स्वभावतः कठिनाः।
वेश्याः समुद्गिका इव क्वणन्ति यंत्रप्रयोगेण ॥ ३२२ ॥
बध्नंति येऽनुरागं दैवहतात्मासु वारवनितासु।
ते निस्सरंति नियतं पाणिद्वयमग्रतः कृत्वा ॥ ३२३ ॥
इदमुपदिशति वयस्ये सुन्दरसेने च मन्मथव्यथिते।
प्रस्तावादुप[4]यातं गीतिद्वयमभ्यधायि केनापि ॥ ३२४ ॥
"तरुणीं रमणी[5]याकृतिमुपनीतां स्मृतिभुवा वशीकृत्य।
परिहरति यो जडात्मा प्रथमोऽसौ नालिको विना भ्रांतिम् ॥३२५॥

---

१ 'करणकोपचिताः' इति मु० पा०। २ 'क्षिप्य' इति ब० पा०।
३ 'कलाधिकाश्च' इति ब० पा०। ४ 'गातुं' इति मु० पा०।
५ 'बाहुसमर्पितहार---' इति ब० पा०।

इदमेव हि जन्मफलं जीवितफलमेतदेव यत्पुंसाम् ।
लटहनितम्बवतीजनसम्भोगसुखेन याति तारुण्यम् ॥ ३२६ ॥
सुमनोमार्गणदहनज्वालावलिदह्यमानसर्वाङ्ग्यः ।
प्रबलप्रेमप्रवणाः प्रमदाः स्पृहयन्ति नान्यपुण्येभ्यः" ॥ ३२७ ॥
एवमुपश्रुत्य वचः समुवाच पुरंदरात्मजः सुहृदम् ।
मम हृदयादिव कृष्ट्वा गीतमिदं साधुनाऽनेन ॥ ३२८ ॥
तदननुसायकविकलां हारलतां हरिणशावतरलाक्षीम् ।
आश्वासयितुं यामो गुणपालित किं विकल्पितैर्बहुभिः ॥ ३२९ ॥
अथ त[१]त्र कापि गणिका गणयंती परिचितं हृतद्रविणम् ।
प्रविशन्तमेव मन्दिरमीर्ष्याव्याजेन निरुरोध ॥ ३३० ॥
काचिद्वंचकदत्तं पुं[२]जीकृतजीर्णवसनमवलोक्य ।
वेश्या विषीदति स्म चपाचये वृत्त[३]कर्तव्या ॥ ३३१ ॥
दैवस्तत्या पतितं दृष्टिपथे भग्नमूल्यविटमेका ।
ज्वलिता रुषा भुजिष्या जग्राह जवेन धाविला ॥ ३३२ ॥
अन्तःस्थितकामिग्टहद्वारगतं लुप्तवित्तनरमन्या ।
समुवाच कुट्टनी [४]व्रज कल्लोलाकल्पदेहेति । ३३३ ॥
प्रकटितदशननखक्षतिरभिदधती राजपुत्ररतियुद्धम् ।
अपरा पुरः सखीनां वारवधूराततान सौभाग्यम् ॥ ३३४ ॥

---

१ 'यत्र' इति ब० पा० ।

२ 'लुण्ठी' इति ब० पा० ।

३ 'व्यर्थ' इति सु० पा० ।

४ 'तं व्रज कल्लालाकल्पदेहेति' इति ब० पा० ।

अन्या कामिस्पर्धावर्धितभाटी समुत्सुका चण्डी ।
सौभाग्यगर्वदर्पं समुवाह विलासिनीमध्ये ॥ २३५ ॥

एकगणिकानुबन्धे क्रोधोद्यतशस्त्रकामिनोः कापि ।
सम्भ्रमतो धावित्वा निवारयामास कुट्टनी कलहम् ॥ २३६ ॥

धनमाहृत्य बहुभ्यो भुञ्जत एकेन केनचित्सार्धम् ।
इति धनवन्तं कामिनमावर्जयति स्म वारवधूः ॥ २३७ ॥

गा[1]यन् गाथामात्रं द्विपदकमथ सौष्ठवेन विट एकः ।
बभ्राम पुरो दास्या विदधद्भक्तीरनेकविधाः ॥ २३८ ॥

कश्चित्पण्यस्त्रीणां विभवोपचितान्यपुरुषयोजनया ।
विदधाति स्माराधनमधनत्वमुपागतः कामी ॥ २३९ ॥

त्वयि सक्तेन मया गृहमुज्झितमधुना परेव जातासि ।
इति ढौकमलभमानः कश्चिद्गणिकामुपालेभे ॥ २४० ॥

उषितामपरेण समं वृद्धविटानां पुरः पराजित्य ।
पूज[2]यति स्म भुजंगः कश्चिद्गणिकां द्विगुणभाट्या ॥ २४१ ॥

दृष्टा[3] त्वया विशेषक वलयकलापी शशिप्रभाभुजयोः ।
बाढं भण भण कीदृक्[4] चारुतरा सा मया दत्ता ॥ २४२ ॥

अद्य चतुर्थो दिवसश्ची[5]नाम्बरयुगलकस्य दत्तस्य ।
तदपि परुषा[6] विलासा वद मदनक किं करोम्यत्र ॥ २४३ ॥

---

१ 'गायन्मात्रागाथा द्विपदिकया' इति मु० पा० ।
२ 'त्याजयति स्म भुजंगं कश्चिद्गणिकां द्विगुणभाटीम्' इति मु० पा० ।
३ 'दृष्टा' इति मु० पा० । ४ 'कानु तरः सोमया दत्तः' इति मु० पा० ।
५ 'चिचा' इति मु० पा० । ६ 'परुषाभिधाना' इति मु० पा० ।

स्नेहपरा मयि केली कलहंसक किंतु राक्षसी तस्याः ।
माता नात्मीकर्तुं वर्षशतेनापि शक्यते पापा ॥ ३४४ ॥

सुमनः कुंकुमवासः सज्जीकुरु किमिति तिष्ठसि विचिंतः ।
अद्य तव दयितिकायाः किंज[1]ल्कक नर्त्तनावसरः ॥ ३४५ ॥

यदि नाम पंच दिवसांस्त्वयि कुरुते प्रेम धनलवं दृष्ट्वा ।
तदपि न रागवती सा कन्दर्पक किं वृथा गर्वः ॥ ३४६ ॥

जीवन्नेव विलासक परिहर दूरेण मूढ हरिसेनाम् ।
बद्धावेशस्तस्यां व्याप्तपुचो महाविषमः ॥ ३४७ ॥

केसरया क्षणदत्तं कृत्वांशुकमुपरि कामिजालस्य ।
लब्धग्रीवं भ्रमतश्चन्द्रोदय पश्य माहात्म्यम् ॥ ३४८ ॥

कौमारकं विहर्[2]त्तुं रतिसमये मदनसेनायाः ।
इच्छामि किंतु तस्या मात्रातीव प्रसारितं वदनम् ॥ ३४९ ॥

विभ्रम कियतस्तपसः फलमेतद्यदुपभुज्यते मदिरा ।
स्वकरेण पीतशेषा मदघू[3]र्णितमदनसेनया दत्ता ॥ ३५० ॥

कुवलयमालानिलयो लीलोदय किमिति सम्प्रति त्यक्तः ।
किं विदधामस्तस्मिन्भ्रातर्दास्या विना मूल्यम् ॥ ३५१ ॥

मुषिताशेषविभूतेरिन्दीवरकस्य यामिनी याति ।
संवाहयतः सम्प्रति मंजीरक तिलकमंजरीचरणौ ॥ ३५२ ॥

अद्यापि बालभावं निखिलं न जहाति बालि[4]का तदपि ।
प्रौढिम्ना मकरन्दक सकला ललना अधःकुरुते ॥ ३५३ ॥

---

१ 'रंगवती' इति ब० पा० । २ 'विधातुं' इति ब० पा०
३ 'मधुघूर्णितदेवदत्तया' इति ब० पा० । ४ 'मदनिका' इति ब० पा० ।

कुञ्जे गत्वा वच्मि तं निर्दयचित्तनर्तनाचार्यम् ।
हारा सुकुमारतनुः किमि[1]ति अममद्य कारिता भवता ॥ ३५४ ॥
निः[2]सारोऽभिनिवेशः शुकशावकपाठने सुरतदेवि ।
तिष्ठति बहिरुपविष्टः प्रतीक्षमाणस्तव प्रेयान् ॥ ३५५ ॥
वीणावादनखिन्ना पतितास्ते वासभवनपर्यङ्के ।
उत्थापय तां त्वरितं स्मरलीलां भत्त[3] आयातः । ३५६ ॥
किमिदं यथास्थितत्वं तव माधवि यन्मुहुर्वदन्त्या मे ।
परिधत्से नाभरणं श्रीविग्रहराजसूनुना दत्तम् ॥ ३५७ ॥
ईदृक्शून्यमनस्त्वं किं कुर्मो मातरिन्दुलेखायाः ।
पा[4]नक्रीडासक्त्या पतितापि न चेतिता कनकनाडी ॥ ३५८ ॥
नकुलः पयो न पायित इति रोषवशादियं हि दुःशीला ।
नाश्नाति कामसेना पुनः पुनर्याच्यमानाऽपि ॥ ३५९ ॥
श्रीबलसुतपरिपालित ऊर्णायुः कि[5]ल मया विजेतव्यः ।
मुकुला मुक्तसुखस्थितिरहर्निशं मेषपोषणे लग्ना ॥ ३६० ॥
आताम्रतां समुपगतमुच्छूनं च करतलं तव ललिते ।
मा पुनरतिचिरमेवं प्रविधास्यसि कन्दुकक्रीडाम् । ३६१ ॥
अभिराम कन[6]कभाटी प्रथममियं गच्छते समुत्पन्ने ।
स्नेहे तु कुसुमदेव्यास्त्वं प्रभवसि जीवितस्यापि ॥ ३६२ ॥

---

१ 'किमियं संमर्दकारिता भवताम्' इति सु० पा० ।
२ 'निःसरको' इति ब० पा० ।
३ 'भट्टपुत्रः' इति ब० पा० ।
४ 'पेन' इति ब० पा० ।
५ 'किमनया' इति सु० पा० ।
६ 'डोम्ब' इति ब० पा० ।

ग्रहणकमर्पय तावद्यदि कौतुकमुपरि चन्द्रले[१]खायाः ।
निर्वर्तितकर्तव्यो दास्यसि किंचिद्यथाभिमतम् ॥ २ ६ ३ ॥
न परमदाता मातः सूनुरसौ वा[२]सुदेवभट्टस्य ।
निर्लज्जः शठवृत्तिः पुनः पुनर्वार्यमाणोऽपि ॥ २ ६ ४ ॥
चपयति वसनानि सदा हठेन सकलानि सुरतसेनायाः ।
न ददात्येकामूर्णामुरणः परमस्ति कर्पासम् ॥२ ६ ५॥ (युग्मम्)
भगिनि न मुंचति वेश्म चणमपि मे[३]चपटराजपुत्रोऽसौ ।
भग्नान्यतराव[४]सरो नग्नेनाधिष्ठितं यथा तीर्थम् ॥ २ ६ ६ ॥
इत्थंप्राया वाचः शृण्वन्विटकुट्टनीसमुद्गीर्णाः ।
तं वेशसंनिवेशं पश्यन् प्रविवेश दारिकावेश्म ॥ २ ६ ७ ॥
(कुलकम्)

आकृष्टमिवोत्कतया स्नपितमिव स्निग्धचक्षुषः प्रसरैः ।
तमुपागतम[५]भ्यर्णं हारलता पूजयामास ॥ २ ६ ८ ॥
सुविहितसमुचितसंस्थितिरवनतशिरसा प्रणम्य तत्सख्या ।
इदमभिदधेऽतिनम्रं सुन्दरसेनः शुभावसरे ॥ २ ६ ९ ॥
प्रियदर्शन किं बहुभिः स्मर[६]पीडितदीनवचनसन्दर्भैः ।
इयमास्ते हारलता जीवनमस्यास्त्वदायत्तम् ॥ २ ७ ० ॥
निर्यन्त्रकेलिविशदं सहजप्रेमानुबन्धरमणीयम् ।
कार्यान्तरान्तरायैरपरिहृतं यातु यौवनं युवयोः ॥ २ ७ १ ॥

---

१ 'सेनायाः' इति ब० पा० ।
२ 'नगररोट' इति ब० पा० ।
३ 'पटरा...' इति ब० पा० ।
४ 'संगो' इति ब० पा० ।
५ 'त्यंतं' इति सु० पा० ।
६ 'पीडनवचनचाटुसंदर्भैः' इति सु० पा० ।

निर्दयमविरतवाञ्छं ध्व[1]स्तत्रपमव्यवस्थितावरणम् ।
उपचीयमानरागं सततं भूयाद्भवत्सुरतम् ॥ २७२ ॥
इति दत्त्वाशिषमन्तर्निर्याते परिजने तदङ्गेषु ।
विस्रम्भविविक्तरसो ववृधे कुसुमायुधः सुतराम् ॥ २७३ ॥
(विशेषकम्)

यदमन्दमन्मथोचितमनुरूपं यत्र[2]वानुरागस्य ।
यद्यौवनाभिरामं यच्च फलं जीवितव्यस्य ॥ २७४ ॥
अविनय एव विभूषणमश्लीलाचरणमेव बहुमानः ।
निःशंकतैव सौष्ठवमनवस्थितिरेव गौरवाधानम् ॥ २७५ ॥
केशग्रहणमनुग्रह उपकारस्ताडनं मुदे दंशः ।
नखविलिखनमभ्युदयो दृढदेहनिपीडनं समुत्कर्षः ॥ २७६ ॥
निगर[3]णलोलं चुम्बनमवयवनिष्पेषण[4]स्पृहो मर्दः ।
अंतःप्रवेशने[5]च्छं निर्भरपरिरम्भणं यस्मिन् ॥ २७७ ॥
यदनङ्गैरिव विहितं रागैरिव दीप्तिमत्त्वमुपनीतम् ।
प्रेमभिरिव नि[6]ःस्खलितं शृंगारैरिव विकासमानीतम् ॥ २७८ ॥
अप्रागल्भ्यं व्यसनं धैर्यमकार्यं विवेक उपघातः ।
ह्रेपणमगुणो यस्मिन् तत्सुरतं प्रस्तुतं ताभ्याम् ॥ २७९ ॥
(कुलकम्)

---

१ 'स्त' इति मु० पा० । २ 'तथा' इति मु० पा० ।
३ 'विगलल्लोलं' इति मु० पा० । ४ 'निःस्पृहो' इति मु० पा० ।
५ 'सिच्छन्नि' इति मु० पा० । ६ 'निस्खलितं' इति मु० पा० ।

प्रारंभ एव तावत्प्रज्वलितः धगिति मनसिजो यस्मिन् ।
तस्य विशेषावस्था वक्तुमशक्याः प्रवृद्धस्य ॥ ३८० ॥
सहजरसेन जडीकृतमिति यूनः कामशास्त्रनिर्णीतौ ।
नानाकरणग्रामे लालि[1]त्यमवाप पाण्डित्यम् ॥ ३८१ ॥
अवि[2]धेयमनाख्येयं प्रविचार्य क्वाढनीयमविषह्यम् ।
न बभूव तयोस्तस्मिन्नारब्धे सुरतपरिमर्दे ॥ ३८२ ॥
अभ्य[3]स्ता या तन्व्या सुरतविधौ विविधचाटुपरिपाटी ।
तामालूनविशीर्णां चकार सहजः स्मरावेगः ॥ ३८३ ॥
सद्भावरागदीपितमदनाचार्योपदिष्टचेष्टानाम् ।
कः परिगणनं कर्तुं रतिचक्राविष्टरमणयोः शक्तः ॥ ३८४ ॥
बाला मृदुगात्रलता दृढपुरुषाक्रान्तविग्रहा न परम् ।
न व्यथिता मुदमाप प्रभवति खलु चित्तजन्मनः शक्तिः ॥ ३८५ ॥
किं रमणी रमणोऽविशदुत र[4]मणी रमणमिति न जानीमः ।
स्वावयवावगमस्त्व[5]प्रकाशमगमत्तयोस्तदा निपुणम् ॥ ३८६ ॥
तस्या निमीलितदृशो निःस्पन्दतनोर्बभूव सुरतान्ते ।
लिङ्गमनङ्गच्छाया जीवितसत्तानुमान[6]स्य ॥ ३८७ ॥
श्रमजलबिन्दूपचिता वृत्तस्मरणेन जातवैलक्ष्या ।
सा शुशुभे रति[7]विरतौ पर्याकुलकेशभूषणा नितराम् ॥ ३८८ ॥

---

१ 'लालित्यमियाय' इति सु० पा० ।        २ 'अभि' इति सु० पा० ।
३ 'अत्यभ्यस्ता यान्या' इति सु० पा० ।
४ 'रमणं सा न जानीमः' इति सु० पा० ।   ५ 'स्तु प्रकाश' इति ब० पा० ।
६ 'नेन' इति सु० पा० ।        ७ 'विपरीता' इति सु० पा० ।

निर्व्याजार्पितवपुषोर्निर्वृतिमयमेव गणयतोर्विश्वम् ।
क्षणदा विरराम तयोरक्षीणाकाङ्क्षयोरेवम् ॥ ३८९ ॥

मोहनविमर्दखिन्ना विजृम्भमाणा स्खलद्गतिर्मन्दम् ।
निद्राकषायिताक्षी हारलता वासवेश्मनो निरगात् ॥ ३९० ॥

"परिचितपार्श्वगताहं तेन समं पानभोजनं कृत्वा ।
नीता निशा कथाभिर्मोहनकार्यं च यत्किंचित् ॥ ३९१ ॥

अविदग्धः श्रमकठिनो दुर्लभयोषिद्युवा जडो विप्रः ।
अपमृत्युरुपक्रान्तः कामिव्याजेन मे रात्रौ ॥ ३९२ ॥

नेच्छाविरतिः क्षणमपि न च शक्तिर्वस्तुशून्यरतियत्नैः ।
केवलमलमद्याहं कदर्थिता वृद्धपुरुषेण ॥ ३९३ ॥

मद्यवशादभियोक्तरि मृतकल्पे तल्पभागमग्नायाः ।
अनि[1]रोधितनिद्रायाः सुखेन मे यामिनी याता ॥ ३९४ ॥

सुकुमारसम्प्रयोगः पेशलवचनः सवक्रपरिहासः ।
शकु[2]नवशेन समेतो मम सखि रमणो मनोहराकारः ॥ ३९५ ॥

[3]पर्यङ्कान्तनिलीनः पराङ्मुखो मुक्तमन्दनिःश्वासः ।
मच्चो[4]दनया नितरां निःस्पन्दः स्वेदसलिलसंसिक्तः ॥ ३९६ ॥

पर्यस्तमितानङ्गोऽप्यपगतनिद्रः क्षपाक्षयाकाङ्क्षी ।
यामोषितः प्रक्षीणो निष्प्रतिपत्तिः स्थितोऽद्य सखि मनुजः ॥
३९७ ॥ (कुल[5]कम्)

---

१ 'अवि' इति मु० पा० ।
२ 'कुशल' इति मु० पा० ।
३ 'पल्यंकाक' इति मु० पा० ।
४ 'द्याचन' इति मु० पा० ।
५ 'युगलकम्' इति ब० पा० ।

शृणु सखि कौतुकमेकं ग्रामीणककामिना[1] यदद्य कृतम् ।
सुर[2]तरसमीलिताक्षी मृतेति भीतेन मुक्तास्मि ॥ ३९८ ॥

अविदितदेशप्रकृतेः शठात्मकाद्दुर्विदग्धतोऽस्माभिः ।
अनुभूतो राजसुताद्धि[3]भाण्डविडम्बनाक्लेश[4]: ॥ ३९९ ॥

प्रियसखि लोकसमक्षं नगरप्रभुणा हठेन नीतास्मि ।
एवं[5] वंचकदातुर्द्विगुणार्थप्रार्थने कुतोऽन्यायः ॥ ४०० ॥

आकर्षन्ती जघनं व्रजसि यथा विलिखिता नखैस्तिलशः ।
मन्ये तथोपभुक्ता केरलि[6] केनापि दाक्षिणात्येन ॥ ४०१ ॥

अधरे बिन्दुः कण्ठे मणिमाला स्तनयुगे शशप्लुतकम् ।
तव सूचयन्ति केत[7]कि कुसुमायुधशास्त्रपंडितं रमणम्" ॥
४०२ ॥

इति शृण्वन्नुषसि गिरो निर्वृत्तनिशाभियोगगणिकानाम् ।
सोऽपि यथाक्रियमाणं प्रविधातुं निर्जगाम कर्तव्यम् ॥ ४०३ ॥
( कुल[7]कम् )

सुर[8]चितरागोपचितिस्वीकृतमनसस्तया समं तस्य ।
यौवनसुखमनुभवतो जगाम संवत्सरः सार्धः ॥ ४०४ ॥

---

१ 'ग्रामीनककामुकेन यद्विहितम्' इति ब० पा० ।
२ 'रतिसुखनि' इति ब० पा० । ३ 'धि भाण्ड ...' इति मु० पा० ।
४ 'वेशः' इति मु० पा० ।
५ 'तु नो कदाचिद्द्विगुणार्थप्रार्थने कृतोऽन्यायः' इति मु० पा० ।
६ 'केरलि' इति मु० पा० । ७ मुद्रितपुस्तके न दृश्यते ।
८ 'स्वरुचितरागोपचितेः' इति मु० पा० ।

विस्रम्भकथाः शृ[1]ण्वन्विचरन्नुद्यानवेदिकापृष्ठे ।
सहचरकरस्थकरः सुन्दरसेनः किल[2] कदाचित् ॥ ४०५ ॥
सूक्ष्मघनतन्तुसंतति[3]तानितनानाम्बरावरणम् ।
यष्टिप्रान्तनियन्त्रितदलवृन्तककुतुपतुम्बिक[4]कटिस्थम् ॥ ४०६ ॥
त्रुटितचरणत्रसंगतसंस्फुटिताभ्यक्तपादमलिनतनुम् ।
त्वरितगतिलेखवाहकमारादायान्तमद्राक्षीत् ॥ ४०७ ॥

(विशे[5]षकम्)

प्रत्यासन्नीभूतं क्रमेण पौरन्दरिः परिज्ञाय ।
साकूतमना ऊचे वयस्य हनुमानयं प्राप्तः ॥ ४०८ ॥
अवनितललीनशिरसा कृतनतिना तेन विनिहितं भूमौ ।
उत्क्षिप्य झटिति लेखं सु[6]न्दरसेनस्तु वाचयामास ॥ ४०९ ॥
"स्वस्तिश्रीकुसुमपुरात्पुरंदरः सुन्दरं समभिधत्ते ।
अन्तर्जृम्भितशोकयस्तोऽवि[7]स्पष्टवर्णपदम् ॥ ४१० ॥
कुलमकलंकं न गणितमवधीरितमग्रजन्मनां चरि[8]तम् ।
नापेक्षितमवगीतं शठसेवितवर्त्मनि त्वया पतता ॥ ४११ ॥
वंशेऽकुटिलगतीनां द्विजिह्वतादोषरहितचरितानाम् ।
अपरविनाशरतानामुत्पन्नः कथमसि भुजङ्गः ॥ ४१२ ॥
क्व पुरोडाशपवित्रितवेदपदोद्गारगर्भवदनं ते
क्व च मदिरासववासितवारवधूमुखरसास्वादः ॥ ४१३

१ 'कुर्वं' इति सु० पा० ।
२ 'कदाचित्तु' इति ब० पा० ।
३ 'तोलिततूला' इति सु० पा० ।
४ 'प्रायस्' इति ब० पा० ।
५ 'कुलकम्' इति सु० पा० ।
६ 'सुन्दर इति' इति ब० पा० ।
७ 'यस्तावि ...' इति सु० पा० ।
८ 'सुचितम्' इति सु० पा० ।

क्व कुचविपाटनजन्मा सहसोदितवेदनाचमत्कारः ।
क्व च दासीरतसंगरनिर्दयनखरक्षतिः शौर्ये ॥ ४१४ ॥
क्व चेतानलधूमक्षोभितनयनाम्बुधौतवदनत्वम् ।
क्व च गणिकानिर्भर्त्सनशोकभरायातवाष्पसलिलौघः ॥ ४१५ ॥
क्व वषट्कारध्वानः षट्कर्मविभूषणं श्रवणपूरः ।
क्व च साधारणवनितारतिमणितकर्णनौत्सुक्यम् ॥ ४१६ ॥
क्वाचार्यप्रतनुलताताडनसंक्षोभसम्भवः कम्पः ।
क्व च कुपितवारललनानिष्ठुरपादप्रहारविषहित्वम् ॥ ४१७ ॥
क्व हरिणचर्मावरणं स्मृतिशास्त्रनिवेदितं व्रतं चरतः ।
क्व च पण्यस्त्रीगात्रस्पृष्टाम्बरधारणेषु बहुमानः ॥ ४१८ ॥
समिधामेव च्छेदनमभ्यस्तं शैशवात्समारभ्य ।
शठवनिताधरखण्डन उत्पन्नं कौशलं कुतो भवतः ॥ ४१९ ॥
शुश्रूषणमेव गुरोः परिशीलितमचलचेतसा सततम् ।
कुटिलमतयो भुजिष्याः कथं त्वयाराधिताः निपुणम् ॥ ४२० ॥
आम्नायपाठ एव स्फुटतरपदसौष्ठवं तव ख्यातम् ।
प्रकुपितवेश्यानुनये क्व शिक्षितं वचनचातुर्यम् ॥ ४२१ ॥
अथवा किं क्रियतेऽस्मिन्नवदातकुलेऽपि लब्धजन्मानः ।
सदसंस्तुता भवंति प्रागुपचितकर्मदोषेण ॥ ४२२ ॥

---

१ 'सत्कर्मविभूषणश्रवणपूरः' इति मु० पा० ।  २ 'रणित' इति ब० पा० ।
३ 'भवतः' इति ब० पा० ।  ४ 'णाः' इति मु० पा० ।
५ 'वद' इति ब० पा० ।

त्वयि विनिवेश्य कुटुम्बं परलोकहितार्जनैकविहितात्मा[१] ।
स्यास्यामीति समीहितमनुदिवसं तद्विमंवदितम्" ॥ ४२३ ॥
इत्यवगतलेखार्थे सुन्दरसेने विधेयपरिमूढे ।
आर्यामगायदन्यः स्वावसरे [२]नीतिपरिकरिताम् ॥ ४२४ ॥
'विषयतिमिरावृतानामवटे पततामदृष्टमार्गाणाम् ।
पुंसां गुरुजनवचनद्रव्यशलाकाञ्जनं शरणम्' ॥ ४२५ ॥
उद्वेजयति तदात्वे सुखसंवि[३]त्तिं करोति परिणामे ।
कटुकौषधप्रयोगो गुरुनिगदितकार्यनिष्ठुरं च[४] वचः ॥ ४२६ ॥
लब्ध्वा वचसोऽवसरं मित्रमवादीत्पुरंदरापत्यम् ।
पुनरपि नहि खिद्यन्ते प्रियजनहितभाषणे सन्तः ॥ ४२७ ॥
अगणितसहचरवचसो दुर्व्यसनमहाब्धिमग्नवपुषस्ते ।
मन्युव्यथितस्य पितुर्यदि परमवलम्बनं वचनम् ॥ ४२८ ॥
निजवंशदीपभूतः श्रुतचरितालंकृतो महासत्त्वः ।
सुन्दर सम्प्रति तातः स्पृष्टो दुष्पुत्रदोषेण ॥ ४२९ ॥
पुत्राभावः श्रेया[५]न्दुःसुतता पुत्रिणः कुलीनस्य ।
अंतस्तापयति भृशं सच्चरितकथाप्रसंगेषु[६] ॥ ४३० ॥
सांव्यवहारिक[७] एष प्रायो लोके [८]गुणोन्नता नियताः ।
येन तु सुतेन जननी वन्ध्यात्वं श्लाघते स पापीयान् ॥ ४३१ ॥

---

१ 'स्थः' इति मु० पा० । २ 'गीतिपरिकलिताम्' इति मु० पा० ।
३ 'संदृद्धिं' इति मु० पा० । ४ 'वचनम्' इति मु० पा० ।
५ 'न कुसु ...' इति मु० पा० । ६ 'षु' इति मु० पा० ।
७ 'त' इति मु० पा० । ८ 'गुणः सुखानियतः' इति मु० पा० ।

विफलं शास्त्रज्ञानं गुरुसहस्रैरपि नोपकाराय ।
विष[1]यवशीकृतमनसो न्याय्यं पन्थानमुत्सृजतः ॥ ४३२ ॥
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् ।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥ ४३३ ॥
नोप[2]निहन्तुं विषयाः शक्याः सत्यं तथापि निपुणधियः ।
अभिधेयतां न गच्छन्त्यपवादविशेषिताभिधानस्य ॥ ४३४ ॥
गुरुपरिचर्या जाया गुणो[3]न्नता स्निग्धबन्धुसंपर्कः ।
ब्राह्मे कर्मणि सक्तिर्लोकद्वयसाधनं सुधियाम् ॥ ४३५ ॥
सुलभा तस्य विभूतिस्तस्य गुणा यान्ति जगति विस्तारम् ।
बहु मनुते तं सुजनस्तस्मै स्पृहयंति बान्धवाः सततम् ॥ ४३६ ॥
नासादयति स[4] एकः सत्सेवितमार्गतः परिस्खलनम् ।
मण्डयति सो[5]ऽन्ववायं स निवासः शर्मणामशेषाणाम् ॥ ४३७ ॥
स भवति विनयाधारो युक्तायुक्ते विवेकिता तस्य ।
वृद्धोपदेशवाचः श्रवणोदर[6]तर्पणं सदा यस्य ॥ ४३८ ॥
( विशे[7]षकम् )

प्राक्तनकर्मविपाकः क्षुद्रासु शरीरिणां यदासक्तिः ।
आयतनं तु सुखानां संसारभुवां कुलोद्गता दाराः ॥ ४३९ ॥
निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाकुलिते ।
प्रतिबिम्बसमा कान्ता संक्रुद्धे केवलं भीता ॥ ४४० ॥

---

१ 'नियति' इति सु॰ पा॰ । २ 'नो परिहर्तुं' इति ब॰ पा॰
३ 'कुलोद्गता' इति सु॰ पा॰ । ४ 'य' इति सु॰ पा॰ ।
५ 'चान्ववायं' इति सु॰ पा॰ । ६ 'पूरणं' इति सु॰ पा॰ ।
७ 'युग्मम्' इति सु॰ पा॰ ।

यावद्वाञ्छितसुरतव्यायामसहाऽविरुद्धसं[1]पर्का ।
चित्तानुवृत्तिकुशला पुण्यवतामेव जायते जाया ॥ ४४१ ॥
सद्भावप्रेमरसं वलयावलिशब्दशंकिता निभृतम् ।
विदधानाङ्गसमर्पणमुन्मीलितकुसुमसायकाकूता ॥ ४४२ ॥
हा हा किमुद्धतत्वं श्रोष्यति कश्चिद्गतत्रप स्वैरम् ।
निकटे परिवारजनो विकृत एव स्मरातुरस्य तव ॥ ४४३ ॥
इति हुंकृतिसंवलितैरायासनिवेदितार्थपदवाक्यैः ।
द्विगुणीकरोति कुलजा नायककर्माणि मोहनप्रसरे ॥ ४४४ ॥
इत्यमुदीरितवाचं सुहृदमवोचत्पुरंदरस्य सुतः ।
समुपस्थितजीवसमाविंयोगभयकंपितो वचनम् ॥ ४४५ ॥
तातादेशोऽलंघ्ये हारलताविरहपावके तीव्रे ।
विधिवशवर्तिनि मरणे नो विद्मः कार्यपरिणामम् ॥ ४४६ ॥
अनपेक्षितधनलाभां स्नेहैकनिबद्धमानसां दयिताम् ।
दैवाकृष्टो मुंचति घटितो वा लोहवज्रकणिकाभिः ॥ ४४७ ॥
अथ कृतगमनविनिश्चितिरभिमतरामां चकार विदितार्थाम् ।
सापि तमनुवव्राज प्रस्तुतयात्रं शुचाकुलिता ॥ ४४८ ॥
आसाद्य वटस्य तलं वाष्पपयःकणचिताक्षिपक्ष्मायाम् ।
विनिहितचरणविहारो हारलतामभिदधाति स्म ॥ ४४९ ॥
आ क्षीरवतो वृक्षादा सलिलाद्वा प्रियं प्रियं यान्तम् ।
अनुयायादिति वचनं तेन लमितो निवर्तस्व ॥ ४५० ॥

---

१ 'संयोगा' इति व० पा० ।

किं कुर्मो दैवहताः प्रभवति यन्निष्ठुरोऽपि न प्रथमम् ।
प्रभवन्त्येके ना गुरुमानमानक्षो निराकरणः ॥ ४५१ ॥

न कुविणलयत्वाभिनैकाभ्यप्रतिबद्धो न च निगुणः ।
न स्वामिसमादिष्टो नाकारविलोभनं न वा ख्यातिः ॥ ४५२ ॥

हेतुरत्र प्रवृत्तेरस्मासु तथापि दैववशात् ।
ईदृक् कोऽप्यनुबन्धो यस्य विपाकोऽप्रतीकारः ॥ ४५३ ॥

( सन्दानितकम्

एतद् यदभिहितास्मि प्रणयरसाच्छक्तिने[1]न नर्मणि वा ।
मुदति न तत्स्मरणीयं दुर्भाषणकौतिकोल्लासे ॥ ४५४ ॥

तव हृदये हृदयमिदं विन्यस्तं न्यासपालनं कष्टम् ।
तत्रान्यथा विधेयं स्थानभ्रंशो यथा न स्यात् ॥ ४५५ ॥

अथ विरतवचोदयितं बाष्पभराक्लिष्टवर्णपदयोगा[2]त् ।
इति कथमपि हारलता संवलितव[3]र्णभारतीमूचे ॥ ४५६ ॥

अविशुद्धकुलोत्पन्ना देहार्पणजीविका शठाचरणा ।
क्वाहं रूपाजीवा क्व भवन्तः श्लाघनीयजन्मगुणाः ॥ ४५७ ॥

यत्तु[4] विषयविलोकनकुतूहलाभ्या[5]गतेन विश्रान्तम् ।
इयतो दिवसानस्मिंस्तन्मम परजन्म[6]सुकृतफलम् ॥ ४५८ ॥

गुरुसेवां बन्धुजनं स्वदेशवसतिं कलत्रमनुकूलम् ।
अनुषङ्गदृ[7]ष्टिपरिचित आस्थां प्रविधाय कः परित्यजति ॥ ४५९ ॥

---

१ 'तं च' इति ब० पा० ।　　२ 'गम्' इति मु० पा० ।
३ 'वस्तु' इति ब० पा० ।　　४ 'यत्त्वं' इति मु० पा० ।
५ 'दागतोऽसि विश्रान्तः' इति मु० पा० ।　६ 'कृतशुभस्य फलम्' इति ब० पा० ।
७ 'दृष्ट' इति मु० पा० ।

यौवनचापलमेतद्यस्मादृषि भवति कौतुकं भवताम् ।
यत्तु सुखमनवगीतं तस्य स्थानं निजा दाराः ॥ ४६० ॥
ते मधुराः परिहासास्ता वक्रगिरः स वामतासमयः ।
नो हृदये कर्तव्यो रहसि चेमाधिना भवता ॥ ४६१ ॥
लाघवतो [1]यन्मनसः प्रणयाद्वा यत्तवाचरितम् ।
प्रतिकूलं तत्र मया नार्याञ्जलिरेष विरचितो मूर्ध्नि ॥ ४६२ ॥
दुःसंचारा मार्गा दूरे वसतिर्विसंष्ठुलं हृदयम् ।
गुणपालित तव सुहृदा भवितव्यमतोऽप्रमत्तेन ॥ ४६३ ॥
हृदयद्वय एकत्वं याते यूनोर्वियोगजं क्लेशम् ।
अनुभवतोरपरेण प्रसंगतः पठ्यते पथ्या ॥ ४६४ ॥
'अन्योन्यगू[2]ढचेष्टितसद्भावस्नेहपाशबद्धस्य ।
विच्छेदकरो [3]मृत्युर्धीराणां वा परिच्छेदः' ॥ ४६५ ॥
अथ तच्छ्रवणानन्तरमा[4]स्स्व सुखं दयितिके व्रजामीति ।
अभिधाय याति [5]मन्दं सुन्दरसेने विवर्तितग्रीवम् ॥ ४६६ ॥
वटशाखालम्बिभुजां श्वसितोष्णसमीरशुष्यदधरदलाम्[6] ।
पर्यस्तां बिभ्राणां तन्मार्गविलोकनानिमेषदृशम् ॥ ४६७ ॥
[7]दोलायमानवे[8]णीं तिर्यग्गतकण्ठभूषणविशेषाम् ।

---

१ 'यन्मदतः प्रणयाद्वा साधु यन्नवाचरितम्' इति मु० पा० ।
२ 'सुदृढ' इति ब० पा० । ३ 'करोद्धे ...' इति मु० पा० ।
४ 'मस्निग्धं' इति मु० पा० । ५ 'सुन्दरसेनेऽपि' इति मु० पा० ।
६ 'मुखीम्' इति ब० पा० । ७ 'लोला' इति मु० पा० ।
८ 'वेणीतिर्यक्कृत ...' इति मु० पा० ।

गलदश्रुवारिपूर्णां पति[1]तांशुकभागनिःसहांगलताम् ॥ ४६८ ॥

रुन्धानामिव हृदयं स्फुटदितरकरेण कुचयुगाश्रयिणा ।
परिशो[2]षितां चिन्ताभिरुत्सृष्टां जीवलोककर्तव्यैः ॥ ४६९ ॥

अंगीकृतां विपत्त्या वशीकृतां मर्मघट्टनैर्विषमैः ।
हारलतामपरि[3]स्फुटमंतःपरिकथ्यमाणभारत्या ॥ ४७० ॥

मा मा तावद्यात क्षणमेकं यावदेष निष्करुणः ।
वनगुल्मैर्न तिरोहित इत्यभिदधतीं जहुः प्राणाः ॥ ४७१ ॥

(कुलकम्)

अथ पश्चा[4]त्समुपेतं पप्रच्छ पुरंदरात्मजः पथिकम् ।
दृष्टा शोकव्यथिता विवर्तमाना वराङ्गना भवता ॥ ४७२ ॥

स उवाच वटतरोरध उर्व्यां पतिता विनिस्सहावयवा ।
तिष्ठति वनिता नान्या नयनावसरं गतास्माकम् ॥ ४७३ ॥

इति तद्वचनाश्म[5]हतो विक्लवमूर्तिः पपात भूपृष्ठे ।
उत्थापितश्च सुहृदा सोऽभिदधे तेन शोकविकलेन ॥ ४७४ ॥

भवतु कृतार्थस्तातस्त्वमपि सुमित्रा[6]स्व संप्रति प्रीतः ।
समकालमेव मुक्ता पापेन मयासुभिश्च हारलता ॥ ४७५ ॥

हा हा हाव हतोसि ध्वस्ता लीला विलास किं कुरुषे ।
उच्छिन्ना विच्छित्तिर्भ्रम विभ्रम दश दिशो निराधारः ॥ ४७६ ॥

---

१ 'पतितां संशुष्कनिः ...' इति मु० पा० ।
२ 'परिशोषितां' इति ब० पा० ।     ३ 'मपि रिक्ता' इति मु० पा० ।
४ 'वर्त्मनि' इति मु० प० ।     ५ 'स्व' इति मु० पा० ।
६ 'च सांप्रतं' इति मु० पा० ।

किलकिंचित गच्छ वनं मोट्टायितमशरणत्वमुपयातम्
कुट्टमित प्रव्रज्यां गृहाण विब्बोक विभ्र भुवो विवरम् ॥ ४७७ ॥
ललितमनाथीभूतं विहृतस्य गतिर्न विद्यते क्वापि ।
शशधरबिम्बद्युतिमुषि यातायामस्त[1]कांतिकं तस्याम् ॥ ४७८ ॥

(विश्लेष[2]कम्)

विनिवृत्य यामि दग्धुं मद्विरहात्त्यक्तवल्लभप्राणाम् ।
भवतु वराक्यास्तस्याः सप्तार्चिर्दानमात्रमुपकारः ॥ ४७९ ॥
गत्वाथ तमुद्देशं यस्मिन्सा पंचभावमापन्ना ।
विललाप मुक्त[3]कण्ठं विलुठन्भुवि सहचरेण धृतमूर्तिः ॥ ४८० ॥
एते वयं निवृत्ता मुंच रुषं देहि कोपने वाचम् ।
उत्तिष्ठ किमिति तिष्ठसि भूमितले रेणुरूषितशरीरा ॥ ४८१ ॥
विनिमील्य दृशौ कस्मादप्रतिपत्त्या स्थितासि शुभवदने ।
[4]त्वद्वारितगमनविधेरपराधितया न मेऽस्ति संयोगः ॥ ४८२ ॥
नाकाधिपतिपुर[5]स्त्रीरभिभवितुं त्वयि दिवं प्रयातायाम् ।
सत्स्वपि शरेषु पंचसु निरायुधः साम्प्रतं मदनः ॥ ४८३ ॥
वंचकवृत्ता वेश्या इत्यपवादो जनेषु यो रूढः ।
अपनीतोऽसौ निपुणं त्वया प्रिये जीवमोक्षेण ॥ ४८४ ॥
वर्ण्यः सद्भूत एकस्त्रिपुरान्तकनन्दनो महासेनः ।
हृदयं यस्य [6]स्पृष्टं न मनागपि वामलोचनाप्रेम्णा ॥ ४८५ ॥

---

१ 'कस्यांतः' इति मु० पा० ।
२ मुद्रितपुस्तके नास्ति ।
३ 'नादं' इति ब० पा० ।
४ 'त्वद्वारित' इति मु० पा० ।
५ 'पुरंध्री' इति ब० पा० ।
६ 'स्पष्टम्' इति मु० पा० ।

मन्येऽभीष्टवियोगं निमेषमपि दुःसहं मम यथार्थे
हरिणा वक्षसि लक्ष्मीर्विधृता गौरी हरेण देहार्धे ॥ ४८६ ॥
अयि लोकपाल सा भुवि ललामभूता तया विना शून्यम्
विश्वमिति किं न चिंतितमात्मस्थानं प्रियां नयता ॥ ४८७ ॥
भगवन्हुतवह सा मा लावण्यसमुद्रसारमुद्धृत्य ।
कथमपि विहितां धात्रा धक्ष्यस्येनां जगद्भूषाम् ॥ ४८८ ॥
इति विलपन्तं बहुविधमवधार्य[1] सुहृत्पुरंदरस्य सुतम्
काष्ठैर्विरचय्य चितां तामकरोदग्निमाङ्गणिकाम् ॥ ४८९ ॥
तस्मिन्निद्धहुताशनविनिपतने कृतमतौ शुचा कलिते ।
मनसि स्फुरितामार्यां पपाठ कश्चित्प्रसंगेन ॥ ४९० ॥
'अनुमरणे व्यवसायं स्त्रीधर्मं कः करोति सविवेकः
संसारमुक्त्युपायं दण्डग्रहणं व्रतं हित्वा' ॥ ४९१ ॥
श्रुत्वा सुन्दरसेनः सु[2]हृदमवोचदपेतवैक्लव्यः ।
प्रतिबोधितं मनो मे धीरेणानेन युक्तमुपदिशता ॥ ४९२ ॥
क्षणदृष्टनष्टवल्लभजन्मजराव्याधिमरणपरिभूते ।
परिवर्तिनि[3] संसारे कः कुर्यादाग्रहं मतिमान्[4] ॥ ४९३ ॥
यातु भवान्कुसुमपुरं वयमप्यन्याश्रमे समाश्रयणम् ।
अंगीकुर्मोऽविद्याप्रहाणसंसिद्धये विहितम्[5] ॥ ४९४ ॥
सोऽवददभिजातजनो बाल्यात्प्रभृति त्वया च न[6] विमुक्तः ।

---

१ 'समालोक्य' इति मु० पा० ।
२ 'सचिवम्' इति ब० पा० ।
३ 'आवर्तिनि' इति ब० पा० ।
४ 'सुमतिः' इति ब० पा० ।
५ 'नियतम्' इति मु० पा० ।
६ 'न मुक्तोऽस्मि' इति मु० पा० ।

न्यसनबुद्धिमधुना[1] कथमुज्झति विषयनिस्पृहं सुहृदम् ॥ ४९५ ॥
एवमिति सोऽभिधाय स्थिरधृ[2]तिनियमैस्तपोधनैर्जुष्टम् ।
गुणपालितेन सहितः सुन्दरसेनो जगाम वनम् ॥ ४९६ ॥
एवं भवन्तु[3] वेश्याः स्वार्थैकरता[4] व्यपेतसद्भावाः ।
अभिलषितविषयसिद्धेः का हानिस्तदपि युष्माकम् ॥ ४९७ ॥
रमणहृदयानुवर्तनचतुरचतुःषष्टिकर्मकुशलानाम् ।
न स्पृशति तत्त्वचर्चा पण्यवधूनां विदग्धचेतांसि ॥ ४९८ ॥
वल्गितप्लुतचित्रगतिस्थितिवे[5]गैश्चोदनानुवृत्त्या च ।
रागस्पर्शेन विना विशति मनः सादिनां तुरगः ॥ ४९९ ॥
गन्धोऽपि कुतः प्रेम्णः परभृतहारीतगृहकपोतानाम् ।
उज्ज्वलयंत्यसमेषुं विरुतविशेषैस्तथापि ते यूनाम् ॥ ५०० ॥
आहितयुक्ताहार्यैः[6] सम्यक्सकलप्रयोगसम्पत्त्या ।
भावविहीनोऽपि नटः सामाजिकचित्तरंजनं कुरुते ॥ ५०१ ॥
येऽपि धनक्षयदोषं पश्यंति जडा विलासिनीश्लेषे[7] ।
प्रष्टव्यास्ते भवता किमकृतकशिपुव्यया दाराः ॥ ५०२ ॥
न च लाभ एक एव प्रवर्तने[8] कारणं मनुष्येषु ।
रागादयोऽपि[9] संति वैशिकशास्त्रप्रणेतृभिः[10] कथिताः ॥ ५०३ ॥

---

१ 'रधुना' इति मु० पा० ।
२ 'मति' इति मु० पा० ।
३ 'न्ति' इति मु० पा० ।
४ 'इशो' इति ब० पा० ।
५ 'बोधैः' इति मु० पा० ।
६ 'युक्ता' इति मु० पा० ।
७ 'षैः' इति ब० पा० ।
८ 'प्रवर्तते' इति मु० पा० ।
९ 'बाणादयोऽपि' इति मु० पा० ।
१० 'वैशेषिकशास्त्रवेदिभिः' इति मु० पा० ।

का वा विभूतिराशा सुन्दरसेनाकृया तपस्विन्या ।
यद्विरहकुलिशभिन्ना[1] मुमोच सा जीवितं क्षणार्धेन ॥ ५०४ ॥
उत्तमतरुणप्रकृतिः पुलकादिकसूचितान्यत[2]नुसक्तिः ।
स्फुटसंनिहितविभावो निवार्यते केन शृंगारः ॥ ५०५ ॥
अन्तःकरणविकारं गुरुपरिजनसंकटेऽपि कुलटानाम् ।
जानंति तदभियुक्ता भ्रूभंगापांगमधुरदृष्टेन ॥ ५०६ ॥
अन्या विहाय पतिगृहमविचिंतितकुलकलङ्कजनगर्हाः[3] ।
रागोपरक्तहृदया यान्ति दिगन्तं मनुष्य[4] आसज्य ॥ ५०७ ॥
अपमानः पतिविहितो गुरुपरिकरतीव्रता गृहे दौःस्थ्यम् ।
शीलक्षतये यासां तासामतिरागतोऽन्यनरसक्तिः ॥ ५०८ ॥
या अप्यचलितवृत्ता भर्तृस्मरणाञ्जतत्पराः प्रमदाः ।
ता अपि रागविमुक्तास्तिष्ठन्त्यौचित्यमात्रेण ॥ ५०९ ॥
त[5]स्मात्तास्वभिगमनं विविधनिमित्तं नि[6]वार्यते केन ।
निजपरपक्षस्त्रीणां रागाधीनं तु हृदयनिर्वहणम् ॥ ५१० ॥
एवंविधदृष्टान्तैरुपपत्तियुतैस्तथेदृशैर्वाक्यैः ।
अन्यैरपि चाटुपदैरावर्जितमानसो[7] गम्यः ॥ ५११ ॥
विहितस्वाप[8]विबोधं किंचित्प्रक[9]टीकृतश्रमग्लान्या ।
उत्पादितजृम्भिकया परिरभ्य घनं निशापगमे ॥ ५१२ ॥

---

१ 'त्ता' इति ब० पा० । २ 'तर' इति मु० पा० ।
३ 'गेहाः' इति मु० पा० । ४ 'प्यलाभाय' इति मु० पा० ।
५ 'तस्मादात्माभिगमनविविधनिमित्तं' इति मु० पा० ।
६ 'विधार्यते' इति मु० पा । ७ 'सं गम्यस्' इति मु० पा० ।
८ 'स्वोधं' इति मु० पा० । ९ 'प्रकटीकृतश्रमं दाक्ष्यात्' इति मु० पा० ।

विघटितपुटं कुड्मलमा विलोक्य ककुभः सदीर्घनिःश्वासम् ।
त्वकृत्यमिति भवत्याः रजनि खले किं प्रभातासि ॥ ५१३

(विशेषकम्)

अबला विषहेत कथं कुट्टनिकामुख्य रतिरसप्रसरम् ।
मदनजनितानुरागो न विदध्याद्यदि बलाधानम् ॥ ५१४ ॥
धन्या चक्राङ्कवधूः प्रियतमसंघट्टनसमयसम्प्राप्ता
यामिना वियुज्यमाना कुमुदवति क्षीणपुण्यासि ॥ ५१५ ॥
विकसितसुरभिमनोहरसंस्थानं सरसकुसुमसम्प्राप्तम् ।
न करोति तथा पीडामास्वादितविच्युतं यथा भृंग्याः ॥ ५१६ ॥
विज्ञापयाम्यतस्त्वां रचितांजलिमौलिना विधाय नतिम् ।
परिचारकजनमध्ये गणनीयाहं प्रसादेन ॥ ५१७ ॥
अथ दीपितरागांगैरपहस्तितलज्जामदिक्रमोपचितैः ।
मृदुभिस्त्वित्ता नुगतैरुपचारैः पातितस्य विश्वासे ॥ ५१८ ॥
अवलोकितोऽसि लम्पट किमिति वदन्कर्णसंनिधौ निभृतम्
संकटसेनाधाम्ना अद्य मया जालमार्गेण ॥ ५१९ ॥
मालत्या सह केलिं विदधासि सखी ममेति न विरोधः ।
यत्तु चिरं स्निग्धदृशा पश्यसि तां तत्र मे शंका ॥ ५२० ॥

१ 'विनिमृद्य' इति मु० पा० । २ 'सु' इति मु० पा० ।
३ 'प्रयातासि' इति ब० पा० ४ मुद्रितपुस्तके नास्ति ।
५ 'तुलिता' इति मु०पा० । ६ 'चक्राङ्कवधूप्रिय ...' इति मु० पा० ।
७ 'कुमुदिनि' इति मु० पा० ८ 'तिं यथा भृंगः' इति मु० पा०
९ 'माविधाय' इति मु० पा० । १० मुद्रितपुस्तके एतच्छ्लोकान्तं युग्ममिति दृश्यते ।
११ 'मार्गसंभ्र' इति मु० पा० । १२ 'चा' इति मु० पा० ।
१३ 'य' इति मु० पा० । १४ 'किंचिदभिदधासि सखे' इति मु० पा० ।

त्वामागता न वीक्षितुमनुबध्य न याचितः प्रयत्नेन ।
आहूय वद किमर्थं ताम्बूलं ग्राहिता कमलदेवी ॥ ५२१ ॥

कंचुकमपकर्षन्त्याः प्रकटीभव[1]दंसकक्षकुचपार्श्वम् ।
साभिनिवेशं दृष्टं भवता किं कुन्दमालायाः ॥ ५२२ ॥

परिहासेन गृहीता यदंशुकपल्लवे त्वया रामा ।
आच्छा[2]द्यापक्रान्ता किं मा[3]मवलोक्य पृष्ठतः सहसा ॥ ५२३ ॥

विज्ञानेन ख्यातां कुसुमलतां त्वं तु वर्णयस्यनिशम् ।
नृत्यंतीं मृगदेवीं विस्फारितलोचनः पश्यन् ॥ ५२४ ॥

कारणमत्र न वेद्म्यहमृजुपन्थानं प्रसिद्धमुत्सृज्य ।
वक्रेण यदेषि [4]पथा माधवसेनागृहाग्रेण ॥ ५२५ ॥

इति सेर्ष्योपन्यासैरन्यैश्चाममर्मवेधिलघुकोपैः ।
प्रणयप्रभवैर्विदि[5]ते शातोदरि गूढरागत्वे ॥ ५२६ ॥

श्रुतिविषयेऽन्तरिततनुर्जनितस्थितिरायताक्षि सह मात्रा ।
परुषगिरा त्वं कुर्या इत्थं मिथ्यावचःकलहम् ॥ ५२७ ॥

(अंतः कुलकम्)

अक्लेशोपनतधनः प्रेमप्रह्वो निरर्गलत्यागः ।
भट्ट[6]महानन्दसुतो निधिभूतोऽभव्यया त्वया त्यक्तः ॥ ५२८ ॥

व्यसनोपहतविवेको दै[7]वैकगतिः स्वदारविद्वेषी ।
मामविगणय्य मूढे निर्भर्त्सित एव केशवस्वामी ॥ ५२९ ॥

---

१ 'दङ्गकुचपार्श्वम्' इति मु० पा० । २ 'च्छि' इति मु० पा० ।
३ 'त्वा' इति मु० पा० । ४ 'सदा' इति मु० पा० ।
५ 'विहिते' इति मु०पा० । ६ 'भट्टानन्दस्य सुतो' इति मु० पा० ।
७ 'दानैकरतिऽ' इति मु० पा० ।

अगणितराजापायोऽविच्छिन्नायः स्वभावतस्त्यागी ।
किमु[1] पेक्षितोऽनुरक्तो वामधिया श्रौ[2]ल्किकाध्यक्षः ॥ ५३० ॥
पितुरेक एव पुत्रस्तु[3]तुर्यवयसो गदाभिभूतस्य ।
द्रविणवतः श्वशुरातो निराकृतो भूरिकामया सोऽपि ॥ ५३१ ॥
स्वकरेण परित्यक्ता त्वया विभूतिः करोमि किं पापा ।
सर्वभ[4]रेणोपनतं वसुदेवमनादरेण पश्यन्त्या ॥ ५३२ ॥
पुरुषान्तरसंघर्षात्प्रोत्साहितचित्तवृत्ति[5]निरपेक्षम् ।
वसु विसृजति यो रभसात्तस्य न वार्ता त्वया पृष्टा ॥ ५३३ ॥
चित्रादिकलाकुशलः स्मरशास्त्रविच[6]क्षणो वृषप्रकृतिः ।
उपकुर्वन्नपि सर्वो विद्वेषिगणे त्वया क्षिप्तः ॥ ५३४ ॥
चन्द्रवतीमाभरणं दत्तं मधुसूदनस्य पुत्रेण ।
पश्यन्ती विभ्राणामयि रागिणि किं न जि[7]ह्रेषि ॥ ५३५ ॥
ग्रामोत्पत्ति[8]रशेषा प्र[9]विशंती सिंहराज[10]विनियोगात् ।
मन्मथसेनावासे[11] लघयति ते रूपसौभाग्यम् ॥ ५३६ ॥
आस्तामपरो लाभो नृप[12]वल्लभनन्दिसेनतनयेन ।
शिवदेव्या उपचारः क्रियते य[13]स्तेन पर्याप्तम् ॥ ५३७ ॥

---

१ 'स्वकरेण परित्यक्तो' इति मु० पा० । २ 'शौण्डिका' इति मु० पा० ।
३ 'स्तुतीय' इति मु० पा० । ४ 'सरेणो' इयि ब० पा० ।
५ 'रतपेक्षम्' इति ब० पा० । ६ 'विलक्षणो' इति मु० पा० ।
७ 'ह्रीतासि' इति मु० पा० । ८ 'रशेषां' इति मु० पा० ।
९ 'पश्यन्ती' इति मु० पा० । १० 'श' इति मु० पा० ।
११ 'सं' इति ब० पा० । १२ 'भट्टाधिप' इति मु० पा० ।
१३ 'यत्नेन' इति मु० पा० ।

पश्येदं धवलगृहं पाशुपताचार्यभावशुद्धेन ।
कारितमनंगदेव्या विभूषणं पत्तनस्य सकलस्य ॥ ५३८ ॥
आपणिकार्थस्य कुतो राजा लभते चतुर्थमपि भागम् ।
हट्टपतिरामसेनप्रसादतो नर्मदा यमुपभुंक्ते ॥ ५३९ ॥
पुंस्त्वाख्यापनकामो न स्त्री न पुमान्किल प्रभुस्वामी ।
अनुबध्नन्नुपहसितस्त्वया ज[1]डः स्वार्थमनपेक्ष्य ॥ ५४० ॥
वाजीकरणैकमतिर्नरनाथानुग्रहेण विख्यातः ।
प्रत्याख्यातः स तथा रविदेवः किंकरत्वमाकांचन् ॥ ५४१ ॥
किं कन्दर्पकुटुम्बे जातोऽसावुत वशीकरणयोग[2]म् ।
का[3]मप्यवैति सिद्धं[4] येनाकृष्टासि सर्वभावेन ॥ ५४२ ॥
बाल्ये तावदयोग्या पश्चादपि वृद्धभावपरिभूता ।
तारुण्ये रागहृता यदि गणिका भ्रमतु तद्भिक्षाम् ॥ ५४३ ॥
उपनय भाण्डकमेतद्यदर्जितं मामकेन देहेन ।
विदधामि तीर्थयात्रामा[5]स्व सुखं प्रेयसा सार्धम् ॥ ५४४ ॥
(अन्तःकुलकम्)

आर्यजननिन्दितानां पापैकरसप्रकाश[6]नारीणाम् ।
एतावानेव गुणो यदभीष्टसमागमो निरावरणः ॥ ५४५ ॥

---

१ 'जडे' इति ब० पा० । २ 'गात्' इति मु० पा० ।
३ 'काम.—' इति मु० पा० । ४ 'सिद्धिं' इति मु० पा० ।
५ 'माः स्व' इति मु० पा० । ६ 'अनेकनारीणाम्' इति मु० पा० ।

मे, धनलाभो लाभो लाभः खलु वल्लभेन संयोगः ।
अचिरगतादर्थाप्तिर्भवति मनसः प्रमो[1]दाय ॥ ५४६ ॥

गाढानुरागभिन्नं तारुण्यरसा[2]मृतेन संसिक्तम् ।
न भजति सहृदयहृदयं विभवार्जनसम्भवा चिन्ता ॥ ५४७ ॥

लाभः स एव परमः पर्याप्तं तेन तेन दृष्टास्मि ।
विनिवेश्य यदुत्सङ्गे निक्षिपति मुखे [3]मुखेन ताम्बूलम् ॥ ५४८ ॥

सुरतश्रमवारिकणान्परिमार्ष्टि निजांशुकेन गात्रेषु ।
यदुरसि निधाय [4]विहसंस्तस्य न मूल्यं वसुन्धरा सकला ॥ ५४९ ॥

शिथिलितनिजदाररतिर्मयि सक्तमना अनन्यकर्तव्यः ।
यदसौ जितनलरूपस्तिरस्कृतं तेन गाणिक्यम ॥ ५५० ॥

वकुलकुसुमरसास्वादं कुर्वाणा मधुकरी[5] विधिनियोगात् ।
ईदृक्प्र[6]सवविशेषं लभते खलु येन भवति कृतकृत्या ॥ ५५१ ॥

अयि सरले तावदिमा उपदेशगिरो [7]विशंति कर्णांतः ।
यावन्नान्तर्भूतं तच्चेतसि मामकं चेतः ॥ ५५२ ॥

श्रीरस्तु दुर्गतिर्वा वेश्मनि वासो [8]महत्यरण्ये वा ।
स्वर्लोके नरके वा किं बहुना तेन मे सार्धम् ॥ ५५३ ॥

इदमास्तेऽलंकरणं दुर्जननि गृहाण किं ममैतेन ।
तेनैव भूषिताहं गुणनिधिना भट्टपुत्रेण ॥ ५५४ ॥

---

१ 'प्रसादाय' इति मु० पा० ।
२ 'सुखा' इति मु० पा०
३ 'स' इति मु० पा० ।
४ 'खिंजंस' इति मु० पा० ।
५ 'मधुकरीव विधियोगात्' इति मु० पा० ।
६ 'पुरुष' इति मु० पा० ।
७ 'वसंति' इति मु० पा० ।
८ 'वल्ल' इति मु० पा० ।

उचितस्थानविहुकान्तदर्शने [illegible] सर्वेषाम्
एवमभिधाय चान्यूढि प्राप्तः [illegible] ॥ ५५५ ॥

(कुलकम्)

इति रागार्तो[1] श्रुत्वा चेतसि कुरुते कदाचिदेवमिदम्
स्नेहाधिष्ठितमनसामवि[3]धेयं नास्ति नारीणाम् ॥ ५५६ ॥
जननीं जन्मस्थानं बान्धवलोकं वसूनि जीवं च
पुरुषविशेषासक्ताः सीमन्तिन्यस्तृणाय मन्यन्ते ॥ ५५७ ॥
रणशिरसि हते वज्रे वज्रोपमशत्रुनिर्गतप्राणा ।
प्राणान्मुमोच दयिता न मंत्रविधिना [4]कृता रामा ॥ ५५८ ॥
कान्तवशेनायासीत्पंचत्वं दाक्षिणात्यमणिकंठः ।
[5]प्रेमोपगता वेश्या तेनैव समं जगाम [6]भस्मत्वम् ॥ ५५९ ॥
भास्करवर्मणि याते सुरवसतिं वाञ्छितापि भूपतिना ।
तद्दुःखमसहमाना प्रविवेश विलासिनी दहनम् ॥ ५६० ॥
ज्वालाकरालकृतभुजि नग्नाचार्यः पपात नरसिंहः ।
तस्मिन्नेव शरीरं निजमजुहोच्छोकपीडिता वेश्या[7] ॥ ५६१ ॥
प्रीतिभराक्रान्तमतिस्त्रिदशालयजीविकां क्रमोपगताम् ।
अङ्गीचकार मुक्त्वा [8]जीहम्ना मि[2]अपुत्रमा मृत्योः ॥ ५६२ ॥

---

१ हस्तपुस्तकद्वये नास्ति ।
२ 'रागांधः' इति ब० पा० ।
३ 'भि' इति ब० पा० ।
४ कृतानुयारामा इति मु० पा० ।
५ 'पंचत्वम्' इति मु० पा० ।
६ 'दासी' इति मु० पा ।
७ 'जीर्णा' इति मु० पा० ।
८ 'भट्ट' इति ब० पा० ।

देशान्तरादुपेता[1] प्रसादमात्रेण वीक्षिता वनिता ।
तत्याज न पादयुगं समरे निहतस्य वामदेवस्य ॥ ५६३ ॥

भट्टरुद्रस्वकतनये याते वसतिं परेतनाथस्य ।
चक्रे देहत्यागं रणदेवी[2] वारयोषितां मुख्या ॥ ५६४ ॥

अस्यामेव नगर्यां द्रविणमदात्कालसंचितमशेषम् ।
प्रेम्णाकृष्टा गणिका मिश्रात्मजनीलकंठाय[3] ॥ ५६५ ॥

इयमपि मयि विहितास्था[4] मातृवचःश्रवणकलुषिता क्व गता ।
त्यक्त्वाभरणं सर्वं प्रविजृम्भित[5]मन्युसंवेगा ॥ ५६६ ॥

उत्सृष्टालंकरणां परिशेषित[6]मातृमुक्तपरिवाराम् ।
संतर्पयामि संप्रति सर्वस्वेनापि हरिणाक्षीम् ॥ ५६७ ॥

गेहेन किं प्रयोजनमन्यैरपि बन्धुदारपरिवारैः ।
संसारग्रहकारणमेका खलु मालती मम हि ॥ ५६८ ॥

अमृतकरावयवैरिव घटिता सा[7] दृढतरं परिष्वज्य[8] ।
चेतो नयति समत्वं ब्रह्मण आनन्दरूपस्य ॥ ५६९ ॥

आविर्भवदात्मभवक्षोभक्षतधीरता[9] घनं रभसात् ।
विगलितकुचयुगलावृतिरालिंगति मालती धन्यम् ॥ ५७० ॥

---

१ 'देशान्तरादुपेते प्रसादमात्रेण वीक्षिते वनिते । पादयुगं तत्यजतुर्न नामदेवस्य समिति निहतस्या' इति ब० पा० ।
२ 'सहदेवी' इति ब० पा० ।
३ 'भट्टात्मज' इति ब० पा० ।
४ 'विहितास्था मां मातृवचः कलुषिता क्व गता' इति मु० पा० ।
५ 'परिवर्धित' इति मु० पा० ।
६ 'मातरं विमु...' इति ब० पा० ।
७ 'या' इति मु० पा० ।
८ 'क्ता' इति मु० पा० ।
९ 'ताद्य धृतरभसा' इति मु० पा० ।

निर्दयतरौष्ठखण्डनसव्यथहुङ्कारमूर्च्छितं सुरते ।
अहहेति वचस्तस्या अपुण्यभाजो न शृण्वन्ति ॥ ५७१ ॥

स्मृतिजन्मजनितविकृतिव्रततिच्छन्नं करोति संसारम् ।
आबद्धसुरतसंगरविमर्दसंक्षोभिता दयिता ॥ ५७२ ॥

गाढतराश्लिष्टवपुर्भजते कान्ता प्रमोदसंमोहम् ।
शिथिलीकृता तु किंचिद्विविधविकारं समुच्छ्वसिति । ५७३ ॥

सन्त्यन्या अपि सत्यं पुरुषोचितकर्मपण्डिताः प्रमदाः[1] ।
स्पृष्टा[2] तया तु नियतं विपरीतरतक्रियागोष्ठी ॥ ५७४ ॥

तन्त्रीवाद्यविशेषानु[3]द्दामानन्यजन्मनस्तस्याः ।
कुहरितरेचितकम्पितसम्पादननैपुणं करोति ज[4]डान् ॥ ५७५ ॥

ललितांगहारजृम्भितवलितस्मितवेपनानि मालत्याः ।
पश्यञ्जहाति कामो रतिमोहनचेष्टितेषु बहुमानम् ॥ ५७६ ॥

न ग्राम्यं परिहसितं नाविभ्रमतरलितो[5]ऽक्षिविक्षेपः ।
सुर[6]तोद्योगनिरोधो दोहददानं न पुष्पबाणस्य ॥ ५७७ ॥

नार्थपरो लप[7]नरसो न पराशयवेदने विचक्षणता ।
नासौष्ठवं प्रसंगे[8]नोल्बणगुणकीर्तनेषु भारत्याः ॥ ५७८ ॥

नापरपुरुषश्लाघा न त्यागः कालदेशवेशस्य ।
वैदग्ध्यजन्मभूमेर्गुरुजघनभरेण मन्दयातायाः ॥ ५७९ ॥

(विशेषकम्)

---

१ 'वेश्याः' इति मु० पा० ।
२ 'दृष्टानया' इति मु० पा० ।
३ 'द्दु' इति मु० पा० ।
४ 'रुजस्' इति मु० पा० ।
५ 'ताक्षि' इति मु० पा० ।
६ 'तानुद्योगविधौ' इति मु० पा० ।
७ 'नयन' इति मु० पा० ।
८ 'प्रसंगे न चान्यगुण...' इति मु० पा० ।

9

चङ्क्रमणि चलनं [१]हंसं समाश्लेषनकुलपरिरम्भम् ।
पारावतावगूहनमाचरति सुमध्यमा यथावसरम् ॥ ५८० ॥
नटकवचनं [२]हावप्रभृति हननमानमस्य जायते ।
अनुकूलसुन्दरा अपि भरणीयाः केवलं दाराः ॥ ५८१ ॥
सूचयति पृथक्करणं भ्रातॄणां वक्ति विषमशीलत्वम् ।
विवृणोति गृहविभूतिमभिनन्दति पितृकुलस्य गुणवत्ताम् ॥ ५८२ ॥
अन्यसुतपक्षपातं कथयति मातुस्तिरस्करोति पतिम् ।
[३]पार्श्वनिमग्ना जाया मा यातु विमुच्य कार्मुकं मदनः ॥ ५८३ ॥
( युग[४]लकम् )

एवं कृतेऽपि सुन्दरि यदि तिष्ठति नायकः प्रकृत्यैव ।
इत्थं पथि परिमोषस्त्वत्सख्या नैपुणेन वक्तव्यः ॥ ५८४ ॥
गृहकार्यव्यग्रतया चित्तग्रहणाय वा कुलस्त्रीणाम् ।
नायाते भवति सखी प्रावृड्घनकलुषिते दिशां चक्रे ॥ ५८५ ॥
[५]प्रग्रीवकशयनगता स्फारीभवदात्मसम्भवविकारा ।
त्वद्वर्त्मनिहितनेत्रा गीतामन्येन गीतिकामशृणोत् ॥ ५८६ ॥
( युग[६]लकम् )

'यदि जीवितेन कृत्यं सम्भावय विरहिणि प्रियं तूर्णम् ।
घनरसितस्य हि पुरतः कदलीदलकोमलः कुलिशपातः ॥ ५८७ ॥

---

१ 'हंसस्याश्लेषं नकुलपरिरम्भम्' इति व० पा० ।
२ 'वदन' इति मु० पा० ।
३ 'पार्श्वनिमग्नां जायां मानयति विमुच्य कार्मुकं मदनः' इति मु० पा० ।
४ मुद्रितपुस्तके नास्ति ।
५ 'प्राग्ग्रीवक' इति मु० पा० ।
६ मुद्रितपुस्तके न दृश्यते ।

[illegible] ॥ ५८८ ॥
मम नु [illegible] लब्ध्वा सहायसामग्रीम्।
विदधाति मकरकेतन उत्कलिकाविधुरितं हृदयम् ॥ ५८९ ॥
उत्कण्ठयन्ति भृशं मां समीरणो बकुलकुसुमगन्धाढ्यः।
उच्चाटयंति धैर्यान्मधुरध्वनिभिः कलापभृतः ॥ ५९० ॥
सतडिन्मिलद्बलाकामसिताम्बुधरावलीं समुद्यन्तीम्।
उत्सहते सा वीक्षितुमविरलमालिंगितो यथा कान्तः ॥ ५९१ ॥
स्वेच्छागमनमसुखं पङ्कलापार्द्रं निशासु पन्थानम्।
न विचारयंति महिला अभीष्टजनसंगतावुत्काः ॥ ५९२ ॥
क्रियतां भूषणशोभा त्वरयति मे मानसं मनोजन्मा।
रंजयति मनो नितरां कलधौतनिवेशितं रत्नम् ॥ ५९३ ॥
घनजलदावृतककुभि प्रदोषसमये प्रदोषगमनाय।
विदधानया कुबुद्धिं रागान्धे किमिदमारब्धम् ॥ ५९४ ॥
वचनप्रपंचसारं जायाश्रितमन्यदेशसम्बन्धम्।
पुरुषमभिगन्तुकामा नवेयमभिसारिका दृष्टा ॥ ५९५ ॥
[3]जलधौततिलकरचनां गलदम्बोविन्दुलुलितकेशान्ताम्।
तिम्यत्तनुलीनां[4]वृतिचण्डानिलसलिलपातकंटकिताम् ॥ ५९६ ॥
अविभावितसमविषमप्रस्खलदंघ्रिं सहायकरलग्नाम्।
पुरतोऽध्वनः प्रमाणं मुहुर्मुहुः साध्वसेन पृच्छंतीम् ॥ ५९७ ॥

---

१ 'नितांतं' इति मु॰ पा॰। २ 'सन्नाहः' इति मु॰ पा॰।
३ 'दर' इति ब॰ पा॰। ४ 'लीला' इति म॰ पा॰।

अन्य[1]स्त्रीषु च पत्यौ व्यग्रे कृच्छ्रेण कथमपि प्राप्ताम् ।
तत्कालयोग्यपरिजननिवेदितामिति विक[2]ल्प्य सह सचिवैः ॥ ५९८ ॥
किं प्रेम्णोऽयं महिमा किमुतानंत्यं[3] धनप्रलोभस्य ।
किं वाऽन्यतः प्रवृत्ता प्रवेपिता[4] वातवर्षेण ॥ ५९९ ॥
संनिहितकलत्राणामनुचितमिति वाह्यलोकसंवदनात् ।
अन्यस्मिन्नुदवसिते विसर्जितामिष्टमालतीकेन ॥ ६०० ॥
लोकेन हास्यमानां बिभ्राणां वाससी जलक्लिन्ने ।
रूपमदमुत्सृजन्तीं वैलक्ष्यादिहसितेन नतवदनाम् ॥ ६०१ ॥
पश्चात्तापगृहीतां कण्टकदर्भाग्रभिन्नपादतलाम् ।
अस्मद्वचः स्मरंतीं द्रक्ष्यंत्यभिसारिकां सुकर्माणः ॥ ६०२ ॥
इति परुषमभिदधानां मातरमवधीर्य युष्मदभ्याशम् ।
चौरहतका व्रजन्तीं विद्रावितरक्षिणः सखीं मुमुषुः ॥ ६०३ ॥

(महाकुलकम्)

एषा प्रपंचरचना यदि भवति वृथा पुनः पुरस्तस्य ।
वणिगिदमुपेत्य वक्ष्यति सहायसंचोदितो भवतीम् ॥ ६०४ ॥
पूर्वं दत्तस्योपरि मुक्ताहारस्य केदराग्लिंशत् ।
परिचारिकया नीता अन्यानपि मृगयते [5]व्ययस्य कृते ॥ ६०५ ॥
यत्तु घनसारकुंकुमचन्दनधूपादिमुक्तकं दत्तम् ।
तत्सम्पुटके लिखितं शृणु पिण्डलिकां करोमि ते पुरतः ॥ ६०६ ॥

---

१ 'अन्यस्मिन्प्रेतपतौ' इति ब० पा० ।
२ 'विकल्पसदृशविधौ' इति मु० पा० ।
३ 'त्यंतं' इति मु० पा० ।
४ 'पि' इति मु० पा० ।
५ 'वयस्य' इति मु० पा० ।

एतावन्तं कालं नाव[1]ष्टभ्यार्थिता मया त्वमसि ।
रिक्तं भाण्डस्थानं साम्प्रतमिति याचना क्रियते ॥ ६०७ ॥

एवंवादिनि तस्मिन्किंचिदज्ञानता[2] चणं स्थित्वा ।
प्रियपूर्वं प्रश्रितया वाचा वाच्यः सवैलक्ष्यम् ॥ ६०८ ॥

हारस्तवैव तिष्ठतु मध्यस्थस्थापितेन मूल्येन ।
शेषं ततो यदन्यत्तद्दिवसैः पूरयिष्यामि ॥ ६०९ ॥

इयमपि कपटशपथना [3]पूर्वसमा चेत्तदेदमभिधेयम् ।
आशंकन्तेऽनिष्टं कातरहृदया हि योषितः प्रायः ॥ ६१० ॥

अपटुशरीरे स्वामिनि विज्ञप्ता भगवती मया गत्वा ।
भवतु निरामयदेहो जीवितनाथस्तव प्रसादेन ॥ ६११ ॥

सम्पन्नवांछितार्था बल्युपहारेण पूजयिष्यामि ।
सामग्रीविरहेण तु न वितीर्णस्तत्र मे मनसि शंका ॥ ६१२ ॥

( विशेषकम् )

अस्मिन्व्यर्थीभूते रिक्तीकृत[4]शीर्णवेश्मनो दाहम् ।
उत्पाद्य मन्दगामिनि सर्वविनाशः प्रकाशमुप[5]नेयः ॥ ६१३ ॥

स्निग्धत्वमलं बुद्ध्वा सहभोजनशयनवसनलिंगेन ।
एभिरुपायद्वारैर्वान्त[6]विरिक्तस्त्वया कार्यः ॥ ६१४ ॥

वार्धुषिककदर्थनया भोगध्वंसात्सहायवचनैर्वा ।
अवधारितेऽपि निपुणं वरगात्रि विलुप्तसारत्वे ॥ ६१५ ॥

---

१ 'नावसरेऽभ्यर्थिता' इति मु० पा० ।
२ 'वैचक्षण्यं दृष्ट्वा' इति मु० पा० ।
३ 'षण्डसमा' इति ब० पा० ।
४ 'शून्य' इति मु० पा० ।
५ 'नेयः' इति मु० पा० ।
६ 'नातिविरक्त' इति मु० पा० ।

परुषवचोनिर्धारणमा[1]यत्यामीहितोपघातीति ।
यत्नादमी विधेया गम्यस्य विमोक्षणोपायाः ॥ ६१६ ॥

रथगामननिर्देशः प्रत्युत्थानादिकेऽपि शैथिल्यम् ।
सासूयमोपहासा आलापा मर्मवेधि परिहसितम् ॥ ६१७ ॥

तत्प्रतिपक्षश्लाघा तदधिकगुणरागकीर्तनावृत्तिः ।
वदति प्रिय आभीक्ष्ण्यं[2] बहुप्रलापित्वदूषणाख्यानम् ॥ ६१८ ॥

वचनान्तरोपघातैस्तत्प्रस्तुतसंकथासमाक्षेपः ।
तद्व्यवहारजुगुप्सा सव्यपदेशस्तदंतिकत्यागः ॥ ६१९ ॥

व्याजेन कालहरणं स्वापावसरे विवर्तनं शयने ।
निद्राभिभव[3]ख्यापनमुद्वेगः संमुखीकरणे ॥ ६२० ॥

गुह्यस्पर्शनिरोधः स्वभावसंस्था[4]रताभियोगेषु ।
चुम्बति वदनविकम्पनमालिंगति कठिनगात्रसंकोचः ॥ ६२१ ॥

असहिष्णुत्वं प्रहणनकररुहदशनक्षतिप्रसंगेषु ।
दीर्घरते निर्वेदः स्वपिहीति [5]रताभियोजके भूयः ॥ ६२२ ॥

तदशक्तावनुबन्धो वैदग्ध्यवि[6]कासने तथा हासः ।
रात्र्यवसानस्पृहया पुनः पुनर्यामिकप्रश्नः ॥ ६२३ ॥

निःसरणं वासगृहादुषसि समुत्थाय तल्पतस्त्वरया ।
सरभसमुदीरयंत्या निशा प्रभाता प्रभातेति ॥ ६२४ ॥ (कुल[7]कम्)

---

१ 'वख्यासाह्वठोपघातीनि' इति मु० पा० ।
२ 'क्ष्णं' इति मु० पा ।
३ 'स्या' इति मु० पा ।
४ 'पनानुयोगेषु' इति मु० पा० ।
५ 'वत्तो' इति ब० पा० ।
६ 'नाशने' इति मु० पा० ।
७ मुद्रितपुस्तके नास्ति ।

उभयेच्छया प्रवृत्तं निरुपाधि प्रेम भवति रमणीयम् ।
अन्योन्यमसमासक्तौ संस्थानमिवाभिजातसर्पणहेतोः ॥ ६२५ ॥
यस्त्वेकाश्रयरागः परिभवदौर्बल्यदैन्यनाशानाम् ।
स निदानं सन्दिग्धं प्रीतिं प्रति दग्धसुखस्येव ॥ ६२६ ॥
यानि हरन्ति मनांसि [2]स्मितवीक्षितजल्पितानि रक्तानाम् ।
तानीव विरक्तानां प्रतिभान्ति विवर्तनानीव ॥ ६२७ ॥
विदधातु किमपि कथमपि निगृह्यमाणा सुरतभाग्निध्ये ।
इति यत्र वचः स्त्रीणां तत्रापि रसंत एव पशुतुल्याः ॥ ६२८ ॥
यत्र न मदनविकाराः सद्भावसमर्पणं न गात्राणाम् ।
तस्मिन्मुद्रितभावे पशुकर्मणि पशव एव रज्यन्ते ॥ ६२९ ॥
अवधीरणयोपहतः प्रतिदिवसं हीयमानसद्भावः ।
अभिमानवान्मनुष्यो योषितमूढामपि त्यजति ॥ ६३० ॥
साचिनिकोचं सख्याः पाणितलं पाणिना समाहत्य ।
यन्नरमुपहसति स्त्री ददातु तस्मै मही रन्ध्रम् ॥ ६३१ ॥
पुरुषान्तरगुणकीर्तनमन्योद्देशेन चात्मनो निन्दाम् ।
शृण्वन्नपि यः स्वस्थः स्वस्थोऽसौ कालपाशबद्धोऽपि ॥ ६३२ ॥
अवगम्याभिप्रायं स्वामिन्याः परिजनोऽपि यं पुरुषम् ।
अवहसति तिरस्कार्यं तस्य न मूल्यं वराटिकाः पञ्च ॥ ६३३ ॥
तत्त्वातत्त्वसमुत्थव्यवहृत्योर्योऽन्तरं न जानाति ।
स्थानं भवति स पशुपतिरपसंशयमर्धचन्द्रलाभस्य ॥ ६३४ ॥

---

१ 'स' इति मु० पा० । २ 'च ललितस्मितवीक्षितानि' इति मु० पा० ।
३ 'मनः' इति मु० पा० ।

क्रमकृशितगौरवांशो रिक्ततया लाघवं परापतितः ।
अप्राप्तपरिच्छेदः प्लवतेऽसौ युवतिसरिति कुमनुष्यः ॥ ६३५ ॥
यत्नेन कपटघटितान् शृंगारोद्दीपनार्थमनुभावान् ।
रतिशिल्पजीविकाभिर्मूढास्तत्त्वेन गृह्णंति । ६३६ ॥
या धनहार्या नार्यो निर्मर्यादाः स्वकार्यतात्पर्याः ।
मह ताभिरपीहन्ते वत मन्दाः संगतमजर्यम् ॥ ६३७ ॥
अपरोक्षधनो गम्यः श्रीमानपि नान्यथेति निर्दिष्टम् ।
कन्दर्पशास्त्रकारैः कुतः कथा लुप्तविभवस्य ॥ ६३८ ॥
व्यासमुनिनापि गीतं द्वावेव नराधमौ मनो दहतः ।
योऽनाढ्यः कामयते कुप्यति यश्चाप्रभुत्वयुक्तोऽपि ॥ ६३९ ॥
क्षीणद्रव्ये देहिनि दारा अपि नादरेण वर्तंते ।
किमुतादानैकरसाः शरीरपणवृत्तयो दास्यः । ६४० ॥
अविदितहेयादेयास्तिर्यंचोऽपि त्यजंति पीतरसम् ।
कुसुमं किमु कार्यविदो वेश्या नरमात्तसर्वस्वम् ॥ ६४१ ॥
उत्पादयति सदानो रागं रागात्मको यथाभ्यधिकम् ।
निर्देहं निर्दानोऽपि सदा नो निःसन्देहं तथैव मनुजन्मा ॥ ६४२ ॥
यदतीतं तदतीतं भाविनि लाभेऽपि नातिबहुमानः ।
तत्कालहस्तनिपतितमनियतपुंसां मुदे वित्तम् ॥ ६४३ ॥
पीड़ितमधु मधुजालं तुच्छीभूतं च मन्मथग्रस्तम् ।
मुञ्चन्ति मदनशेषं क्षुद्रास्त्र प्रकटरामाश्च ॥ ६४४ ॥
एकः क्रीणात्यद्य प्रातर्भविता तथापरः क्रेता ।
अन्यवशे चणमेकं न विक्रयः शाश्वतोऽस्ति वेश्यानाम् ॥ ६४५ ॥

सन्दर्शितपरमार्थं भ्रूक्षेपकटाक्षदृष्टिहसितादि ।
शृण्वंति ये सकर्णास्तत्ततमन्यच्च संक्रान्तम् ॥ ६४६ ॥
यदि नाम निराकरणे न समर्था च्छिन्नकार्यबन्धेऽपि ।
काचिन्महानुभावा बोद्धव्यं तदपि चेतनावद्भिः ॥ ६४७ ॥
तेनार्थेनोपकृतं तथापि तस्य स्वदेहदानेन ।
तच्चातीतं सम्प्रति निरर्थकः शुष्कशृंगारः ॥ ६४८ ॥
अवधीरणा रसायनमवमानो भवति यस्य परितुष्ट्यै ।
योग्योऽसौ पुरुषखरः खरतरनिर्भर्त्सितोक्तिकुलटानाम् ॥ ६४९ ॥
दीपज्वालाज्वलने व्रजतः खलु निर्वृतिं तयोस्त्रियाम्भेदः ।
प्रथमा स्नेहेन विना तथापरा स्नेहयोगेन ॥ ६५० ॥
धर्मः कामनमभिनवगुणवन्निःस्वस्य मदनयोगवतः ।
अर्थोऽर्थवतोऽभिगमात्कामः समरतिनरोपभोगेन ॥ ६५१ ॥
यस्तु न धर्मप्राप्त्यै नार्थाय न कामसाधनोपायः ।
स पुमान्सच्चरितनरैः पर्यनुयुक्तः किमाचष्टे ॥ ६५२ ॥

(मंदाक्रान्तकम्)

कामोद्वेगग्रहीतं धूर्तैरुपहस्यमानशृंगारम् ।
दारिद्र्यहतं यौवनमबुधानां केवलं विपदे ॥ ६५३ ॥
व्यपगतकोषे रागिणि याति लयं पानमात्रलाभकृते[1] ।
क्षुद्रा मधुकरिकाब्जे न तु गणिका चिंतितस्वार्था[2] ॥ ६५४ ॥
यासां कार्यापेक्षा सकटाक्षनिरीक्षणेऽपि वेश्यानाम् ।
दर्शनमात्रक्षुभितैर्वंच्यंते ताः कथं पुरुषैः ॥ ६५५ ॥

---

१ 'हृता' इति ब० पा० ।    २ 'र्थे' इति मु० पा० ।

क्रेयाय दुर्भगानां नाना[१]स्थितिगात्रभंगविन्यासः ।
गणिकाभिनयचतुष्टयमाकर्ष्य स्वापतेयपुष्टानाम् ॥ ३५६ ॥
किं धक्ष्यति भीमोऽपि ज्वलनः खलु तादृशं कुलांगारम् ।
यो दह्यते[२]ऽविरामं विरक्तदासीतिरस्कारैः ॥ ६५७ ॥
गृहमेतदीश्वराणां कांतारं दुष्प्रवेशमन्येषाम् ।
कृत्स्नमिदं[३]कुमुजया 'न मालती कामसचदानपरा' ॥ ६५८ ॥
इति [४]चोदितनिजचेटीनिगदितकटुकाद्य[५]रान्यक्षतलज्जाः ।
आकर्णयतो वाचो दैवोपहतस्य तस्य मर्मरुजः ॥ ६५९ ॥
एवमभिधेयमानो बुध्यति यदि नो पशुर्नराकारः ।
तदिदं सुन्दरि वाच्यः प्रश्निनवचसा त्वया कामी ॥ ६६० ॥
प्रीयत एव तवोपरि हृदयं मे किंतु गुरुजनाधीना ।
मातृवचो[६]ऽतिक्रमणं न समर्था संविधातुमहम् ॥ ६६१ ॥
अर्हसि तावदतस्त्वं गंतुमितः कतिपयान्यपि दिनानि ।
पुनरपि भवतैव समं भोक्तव्यं जीवलोकसुखम् ॥ ६६२ ॥
निर्वासितेऽथ तस्मिन्यः कामी पूर्वमुज्झितो[७] भुक्त्वा ।
तस्य प्राप्तविभूतेर्युक्तिरियं भिन्नसन्धाने ॥ ६६३ ॥
उपवनलीलाविहरणहावोज्ज्वलमंजुलस्य सह तेन ।
वर्णनमितिवृत्तस्य स्मरजविकारास्य वीचिते तस्मिन् ॥ ६६४ ॥

---

१ 'मानस्तुति' इति मु० पा० ।
२ 'दह्यते न विरसं' इति मु० पा० ।
३ 'दं समुजया' इति मु० पा० ।
४ 'तु' इति मु० पा० ।
५ 'ण्यक्षतलज्जा' इति मु० पा० ।
६ 'गतिक्रमणं' इति मु० पा० ।
७ 'तोऽभूत्' इति मु० पा० ।

इदमुपवनमतिधन्यं निर्भरमालिङ्गितं सुरभिलक्ष्म्या ।
मत्क[1]न्धार्पितपाणिर्बभ्राम स यत्र जीवितनाथः ॥ ६६५ ॥
सख्य इतो भ्रमरकुलचासितया प्रियतमो मया सहसा
वक्रीभवत्पयोधरमुपगूढोऽधीरमौत्कागत् ॥ ६६६ ॥
रणदिन्दिन्दिरवृन्दे कूजत्कलकण्ठ[2]वाररमणीये ।
अत्रातिमुक्तकगृहे मरुदीरणविधू[3]तकुसुमसञ्छन्ने ॥ ६६७ ॥
मयि जाताधिकरागो बलवति मदने सहायसामर्थ्यात् ।
कान्तः पल्लवशयने नो हरिणमगाद्विवितर्केषु ॥ ६६८ ॥

(युगल[4]कम्)

प्रेङ्खोल[5]नस्य युक्त्या विधून्याशु हृदयं नखैर्धूर्तः ।
चक्रे मां मदनमयीं [6]व्रततिप्रेङ्खामिमां समारूढाम् ॥ ६६९ ॥
स्पृहणीयोऽयमशोकः स्पृष्टो यद्व[7]ल्लभेन हस्तेन ।
अस्मदवतंसकार्थं नूतनदलपल्लवान्विचारयता ॥ ६७० ॥
अस्मिन्सहकारतले तस्योत्सङ्गे सलीलमासीना ।
अशृणवमहमिति वाचः पश्यन्ती विलसितानि तरुणानाम् ॥ ६७१ ॥
उत्थापय मानरसे[8] दयितं चरणाग्रनिपतितं तूर्णम् ।
अत्याकृष्टं त्रुट्यति सुदृढमपि प्रेमबन्धनं मूढे ॥ ६७२ ॥

---

१ 'मत्कण्ठाश्रित' इति मु० पा० ।  २ 'वार' इति मु० पा० ।
३ 'वितत' इति मु० पा० ।  ४ मुद्रितपुस्तके नास्ति ।
५ 'प्रेङ्खोलनवितरणयुक्त्या' इति ब० पा० ।
६ 'व्रतपुंखमिमां समधिरूढाम्' इति मु० पा० ।
७ 'यद्दुर्लभेन' इति मु० पा० ।  ८ 'मानवशे' इति मु० पा० ।

तिष्ठन्नपि[1] यातसमः किं तेन निवारितेन सखि पशुना ।
याप्नोति निष्प्रकम्पा विनिःसृता यस्य [2]साधरे वाणी ॥ ६७३ ॥
आयुःसारं[3] यौवनमृतुसारः कुसुमसायकवयस्यः ।
सुन्दरि जीवितसारो रतिभोगरसामृतस्वादः ॥ ६७४ ॥
रम्यं कुसुमस्तवकं कुरु मे प्रिय कैंकिरातमवतंसम् ।
तिष्ठतु वा किमनेन प्रत्ययमशोककिसलयं चारु ॥ ६७५ ॥
अस्तामास्तामेतत्रापय मां सिंदुवारमभिरामम् ।
नहि नहि राजति सुतरां चूतद्रुममंजरी कर्णे ॥ ६७६ ॥
धिक्तारुण्यमकान्तं धिक्कान्तं यौवनेन रहितं च ।
धिक्तद्द्वयमपि मन्मथसामर्थ्यविकासितं विना सुरतम् ॥ ६७७ ॥
जनितोऽप्यपराधशतैर्वासे तस्मिंश्चिरप्ररूढोऽपि ।
[4]अवगतमधुना सख्या न[5] वसन्तमतीत्य वर्तते मानः ॥ ६७८ ॥
वर्षशतस्य हि सारः [6]कालवः प्रथममेलकस्थानम् ।
सचकितमागच्छन्ती सोत्कलिकैर्यत्र दृश्यते रमणी ॥ ६७९ ॥
किं निर्मितोऽसि धात्रा नवोऽपरः किमु वसन्तगुण एषः ।
कुसुमशरपूर्णतूणः किमुताभवदन्य एष कंदर्पः ॥ ६८० ॥
नो पश्यसि यदि ककुभः प्रचुरो[7]ज्ज्वलकुसुमसुरभिरमणीयः ।
परभृतकूजनमिश्रं न शृणोषि यदि द्विरेफझंकारम् ॥ ६८१ ॥

---

१ 'उत्तिष्ठन्नपि यातः' इति सु० पा० । २ 'माधवे' इति ब० पा० ।
३ 'शास्त्रविकासं' इति ब० पा० । ४ 'अधि' इति सु० पा० ।
५ 'नव सत्त्वमतीत्य' इति सु० पा० । ६ 'कलेवर' इति सु० पा० ।
७ 'दल' इति सु० पा० ।

गन्धं यदि च न लभसे वासितदिग्व्योम सुमनसां वृन्दम् ।
अनुभवसि यदि स्पर्शं नो शीतलदाक्षिणात्यपवनस्य ॥ ६८२ ॥
[1]रसनेन्द्रियैकशेषः परसंचार्याजनेन परिभूतः ।
नार्हसि तदिति त्यक्तो निजाश्रमं गन्तुमन्यतो निरतः ॥ ६८३ ॥
अस्मिन्सरसि सलीलं करयंत्रविनिर्यदंबुधाराभिः ।
दयितेन ताडिताहं मयाप्यसावाहतो मृणालिकया ॥ ६८४ ॥
पुनरन्तर्जलमग्नो मामुपगम्याविभावितः सहसा ।
उच्चिक्षेप सहासं हासितसन्निहितपरिवारः ॥ ६८५ ॥
संसक्ताद्रावरणं जघनं [2]नः पश्यतस्तदा तस्य ।
प्रथमाकांक्षाकूतं भेजे सम्भोगशृंगारः[3] ॥ ६८६ ॥
कालप्रदेशवेष[4]व्यापारस्थितिविशेषघटनाभिः ।
चिररूढोऽपि हि यूनां नवलमुपनीयते रागः ॥ ६८७ ॥
सादरमर्पयतोऽङ्कं गोत्रस्खलनापराधिनस्तस्य ।
सख्यः स्मरामि सहसा विल[5]क्षतां क्लिष्टहसितस्य ॥ ६८८ ॥
प्रत्यग्रनखव्रणितस्तनान्तरे [6]क्षिपति लोचने स्पृहया ।
[7]प्रेयसि क्रीताच्छादनमकरवमहमब्जिनीपत्रम् ॥ ६८९ ॥
चिरशातर्कितसम्भोगभिंतनलिनीपलाश[8]पुटमारात् ।
आहतया यद्विहितं स्वस्थधिया [9]तन्न शक्यते कर्तुम् ॥ ६९० ॥

---

१ 'वसने स्त्रियैकशेषः खलु पंचार्यो गुणेन परिभूतः ॥' इति मु° पा° ।
२ 'ननु' इति मु° पा° ।
३ 'रस्' इति मु° प° ।
४ 'भोग' इति मु° पा° ।
५ 'च्य' इति मु° पा° ।
६ 'स्पृशति' इति ब° पा° ।
७ 'प्रेमसिताच्छा...' इति मु° पा° ।
८ 'पटभावात्' इति मु° पा ।
९ 'नैव' इति मु° पा° ।

सुविघ्नो [1]हावविधिर्मदनालसगात्रजृम्भितं [2]स्खलितम्
गूढस्थानप्रकटनमङ्गुलिविस्फोटनं स्मितं सुभगम् ॥ ६९१ ॥
नीवीबन्धविमोक्षो मुहुर्मुहुः केशपाशविश्लेषः ।
स्वाधरदशनग्रहणं बालकपरिचुम्बनं रतोत्सुकता ॥ ६९२ ॥
साकांक्षितं क्षिपंत्या तरलायतलोचनं मुहुः कान्ते ।
उद्दिश्य तद्वयस्यकमिति श्लोकयस्त[3]वस्तुगिरः ॥ ६९३ ॥
एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव ।
व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानां च ॥ ६९४ ॥
येन तदा [4]मामूचे परिजनमुत्सार्य विधृतनटमन्युः ।
दर्शितहितस्वरूपः परपीडाकरणपण्डितः [5]प्रखलः ॥ ६९५ ॥
अविदितगुणान्तराणां को[6] दोषः [7]प्रान्तदेशवासानाम् ।
स्वाधीनकुंकुमा अपि यद्विदधति बहुमतिं नीले ॥ ६९६ ॥
क्व महीतलरम्भा[8] त्वं न्यक्कृतचन्द्रप्रभा स्वदेहरुचा ।
[9]चित्रलता क्व वराकी नीचैरुपसेवितारोहा ॥ ६९७ ॥
[10]यस्य न खलु विगणिताः प्रकात्मानो महाधनाः कुलजाः ।
सोऽद्य हृदयेन तस्यां त्वयि तिष्ठति बाह्यवृत्तेन ॥ ६९८ ॥
तामेव समाचरणां सद्भावेन प्रवर्तितां निपुणैः[11] ।

---

१ 'दूरविधि' इति मु० पा० । २ 'ललितम्' इति मु० पा० ।
३ 'वर्णशिरः' इति मु० पा० । ४ 'मा भूवुः' इति मु० पा० ।
५ 'प्रथमः' इति मु० पा० । ६ 'नो' इति मु० पा० ।
७ 'प्र' इति मु० पा० । ८ 'रम्भात्वं' इति मु० पा० ।
९ 'मि' इति मु० पा० । १० 'यस्यार्थे न विग...' इति ब० पा० ।
११ 'णाः' इति मु० पा० ।

वेदंति सब कुशलाः किं [illegible] ॥ ९९ ॥

तव[1] न विकल्पप्रभेदनमलं विदितं[2] मनोवृत्तिः

नारोचति न मह्यं निवेदितं परिजनेन[3] ॥ १०० ॥

इति दुर्जन[4]कृतिभिः श्रुतवाग्विषदूषितममन्तरभुवो मे ।

ईर्ष्यांकुराः प्ररूढाः[5] स्निग्धहृदप्रणयखण्डनप्रभवाः ॥ १०१ ॥

लघुहृदयतया [6]तस्माद्दुर्भाषितवज्रपातविहतानाम्

[7]वक्तृविशेषवितर्को न स्पृशति प्रायशो मनः क्षीणाम् ॥ १०२ ॥

(युग्मकम्)

प्रिय[8]मपि वदन्दुरात्मा क्षिपति विपत्सागरे दुस्तारे ।

आसाद्य प्राण[9]भृतो मृतये परिलेढि जिह्वया [10]खड्गः ॥ १०३ ॥

अतिकोमलमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।

परमार्थतः स हृदयं दहति पुनः कालकूटघटित इव ॥ १०४ ॥

हितमधुराक्षरवाणीव्यवहारमनुप्रविश्य [11]तन्मौनम् ।

सरला दुराशयानामुपघातं फलत एव विंदति ॥ १०५ ॥

परसंतापविनोदो यत्राहनि न प्रयाति निष्पत्तिम् ।

अंतर्मना असाधुर्न गणयति [12]तदायुषो मध्ये ॥ १०६ ॥

---

१ 'कर्म प्रभेदेन' इति मु० पा० । २ 'भवतु' इति ब० पा० ।

३ 'सत्कर्मविवेचने मनोवृत्तिः मारोचतीति मेवं निवेदितं परिजनेन...' इति मु० पा० । ४ 'भि' इति ब० पा० । ५ 'गभि' इति ब० पा० ।

६ 'तस्मा' इति ब० पा० । ७ 'र्म' इति मु० पा० ।

८ 'प्रियमपि वदति दुरात्मा क्षिपति विपत्समस्वनुसारे' इति मु० पा० ।

९ 'हतो' इति मु० पा० । १० 'रवहम्' इति मु० पा० ।

११ 'तन्मानम्' इति मु० पा० । १२ 'तदा सुखोमध्ये' इति मु० पा० ।

यौवनसुखेन सार्धं [1]मयैव यूयं परिच्छिन्नाः ॥ ७२४ ॥

अधुना[2]नुतापपावकमध्यगता पच्यमानसर्वाङ्गी ।
निष्फलजन्मप्राप्तिर्जीवाम्युच्छ्वासमात्रेण ॥ ७२५ ॥

स्थानेषु येषु युष्मत्संग[3]तया क्रीडितं चिरं धृत्या ।
तानि खलु वीक्षमाणा भवामि कण्ठस्थितप्राणा ॥ ७२६ ॥

अन्य[4]वशेन विसंज्ञा कृतभूषा[5] यन्त्रसूत्रसंचारा ।
दारुमयीव प्रतिमा विदधामि विडम्बना वक्त्रैः ॥ ७२७ ॥

यदि नामोदरभरणप्राप्त्यै कुरुतेऽन्यपुष्पसंश्लेषम् ।
तदपि न पुष्टिर्भृङ्ग्या अपिबन्त्या आर[6]बिन्दमकरन्दम् ॥ ७२८ ॥

आस्तामपरो लोकः क्रीडा[7]पेक्षी परापदि प्रीतः ।
व्यसनान्तरे पतन्ती न वारिता परिजनेनास्मि[8] ॥ ७२९ ॥

किं वा बहुभिः कथितैः सम्प्रति हि मयापि नियमिता बुद्धिः ।
स्थास्यामि संनियुक्ता भवद्गृहे प्रेष्यभावेन[9] ॥ ७३० ॥

इति नेत्रादिविकारैर्वशमुपनीतं प्रलीनधैर्या[10]गम् ।
[11]मारग्रहाभिभूतं परिम्रष्टप्राक्तिराकृतिस्मरणम् ॥ ७३१ ॥

प्रादुर्भूतरिरंसं क्षणे क्षणे जघनदेशगतदृष्टिम् ।
पक्वाम्रमिव विमोक्ष्यसि पूर्ववदाचूष्य[12] निःशेषम् ॥ ७३२ ॥

---

१ 'तनयैरेव गृहपरिच्छिन्नाः' इति मु० पा । २ 'नाथ तापः' इति मु० पा० ।
३ 'त्या' इति मु० पा० । ४ 'अन्यवशेना' इति मु० पा० ।
५ 'घणवस्त्रपत्र' इति मु० पा० । ६ 'मधुरहन्द' इति मु० पा० ।
७ 'पेक्षापरो यदि प्रीतिः' इति मु० पा० । ८ 'पि' इति मु० पा० ।
९ 'कार्येषु' इति ब० पा० । १० 'धैर्यस्य' इति मु० पा० ।
११ 'मार' इति मु० पा० । १२ 'चूष्य' इति मु० पा० ।

[1]स्वशरीरामिषदिग्धं [2]वक्रस्मितदृष्टिपात[3]वाग्बडिशम् ।
प्रक्षि[4]प्याकृष्य जडं स्फुरणेन विवर्जितं सुपरिपुष्टम् ॥ १३३ ॥
हस्तद्वयान्तरागतमुपचारय [5]परिव्ययेन संस्कृत्य ।
भुक्त्वा यावन्मांसं त्यजसि चर्मास्थिशेषितं मत्स्यम् ॥ १३४ ॥
शृणु सुश्रोणि यथास्मि[6]न्कमलेश्वरपादमूलमजर्या ।
प्रवराचार्यदुहित्रा राजसुतश्चर्वितश्च मुक्तश्च ॥ १३५ ॥
“आसीच्छ्रीसिंहभटो नाम्ना नृपतिर्महीयसां श्रेष्ठः ।
तस्यात्मजोऽधितष्ठौ निवेशनं देवराष्ट्र[7]सम्बद्धम् ॥ १३६ ॥
स कदाचिद्वृषभध्वजदिदृक्षया परिमिताप्तपरिवारः ।
अनुवर्तमान आगात्तारुण्योदीर्णवेशचरितानि ॥ १३७ ॥
[8]मूर्धत्रिभागसंस्थितबृहदम्बरचीरकेशसंयमनः ।
अल्पा[9]च्छगात्ररागो घनकुङ्कुमलिप्तकर्णकेशाग्रः ॥ १३८ ॥
सिद्धार्थबीजदन्तुरललाटतिलकोपयुक्तताम्बूलः ।
श्रवणनिवेशितकुण्डलटिट्टिभकप्रायकन्धराभरणः ॥ १३९ ॥
केयूरस्थानगत[10]सुवर्णभृतमन्त्रगर्भजतुगुडकः ।
मणिबन्धनविन्यस्तप्रव[11]लाङ्कुरजातरूपमणिमालः ॥ १४० ॥
धृतवेत्रदण्डकूर्चकपरिवेष्टितसान्निधेनु[12]खड्गस्य ।

---

१ ‘ख’ इति मु० पा० ।
२ ‘चंक्रमित’ इति मु० पा० ।
३ ‘मस्खलितम्’ इति मु० पा० ।
४ ‘प्रक्षिप्य क्षिप्रतरं’ इति मु० पा० ।
५ ‘वेन सत्कृत्य’ इति मु० पा० ।
६ ‘कलशेश्वर’ इति ब० पा० ।
७ ‘क’ इति मु० पा० ।
८ ‘पूर्व’ इति मु० पा० ।
९ ‘अल्पतररागसांद्रो’ इति मु० पा० ।
१० ‘स्वर्णाहृत’ इति ब० पा० ।
११ ‘च’ इति मु० पा० ।
१२ ‘मग्न’ इति ब० पा० ।

अग्रोपविष्टनर्तक[1]वांशिकगाढप्रकाशयुवतिगणः ।
श्रेष्ठिप्रमुखवणिग्जनढौकिततांम्बूलकुसुदपटवासः ॥ ७५६ ॥
विविधविलेपनखरटित[2]चक्रकवर[3]खड्गधारिणाशून्यः ।
पृष्ठत आत्तकृपाणैः शिरोभिरच्चैश्च विश्वस्तैः ॥ ७५७ ॥
ताम्बूलकरंकभृता संदंशगृहीतवीटिकाग्रहणे ।
ईषत्स्पृष्टं[4] कुर्वन्मन्दं खट[5]कामुखेन वामेन ॥ ७५८ ॥
पार्श्वविस्थित[6]नर्मप्रियसचिवन्यस्तपूर्वतनुभागः ।
पप्रच्छ[7] कुशलवार्तां स[8] वणिग्जननर्तकप्रभृतीन् ॥ ७५९ ॥

(कुल[9]कम्)

अथ वैतालिक उच्चैरुपसंहृतलोककलकले धीरम् ।
अभितुष्टाव तमित्थं प्रसन्नगम्भीरया वाचा ॥ ७६० ॥
जय देव परबलान्तक गुरुचरणाराधनैक[10]कृतचित्त ।
वरवनिताजघ[11]नासन दारिद्र्यतमःप्रचण्डकर[12]ज्वाल ॥ ७६१ ॥
रणवीरवंशभूषण गुरुवसुधादेवपूजनप्रक्क ।
शरणागताभयप्रद हितबान्धवबन्धुजीवमध्याङ्क[13] ॥ ७६२ ॥

---

१ 'मंशिग्राह' इति मु० पा० ।
२ 'खराटिन्क' इति मु० पा० ।
३ 'धर' इति मु० पा० ।
४ 'त्पृष्ठं' इति मु० पा० ।
५ 'टि' इति ब० पा० ।
६ 'नमद्रव' इति ब० पा० ।
७ 'प्रच्छंस' इति मु० पा० ।
८ 'सवणि...' इति मु० पा० ।
९ 'चक्रलकस्' इति मु० पा० ।
१० 'शुभ' इति मु० पा० ।
११ 'जनमोहन' इति मु० पा० ।
१२ 'दाम' इति मु० पा० ।
१३ 'मार्गस्त्व..' इति मु० पा० ।

[1]ईदृक्प्रतापदहनो [2]भावत्को व्याप्तगगनदिक्चक्रः।
दृष्टो जलाय[3]मानो रिपुवनितातिलकशोभासु ॥ ७६३ ॥
एष विशेषः स्पष्टो वह्नेश्च त्वत्प्रतापवह्नेश्च।
अंकुरति तेन दग्धं दग्धस्यानेन नोद्भवो भूयः ॥ ७६४ ॥
श्रीफलभुक्पचवृत्तो विग्रहरसिको विकुक्तशस्त्ररतिः।
राज[4]स्थितिं न मुंचति हृतलक्ष्मीकोऽपि तव विपक्षगणः ॥ ७६५ ॥
ददतो वांछितमर्थं सदा[5]नुरक्तस्य तव गृहं त्यक्त्वा।
स्त्रीचापलेन कीर्तिर्निर्ग्रामका गता ककुभः ॥ ७६६ ॥
भवतो भवतो धैर्यं तेन हि भिन्नोऽन्ध[6]को रिपुः प्रणतः।
मुक्तास्त्वया[7] हि बहवो रिपवस्तु प्रेक्षकाः समरे ॥ ७६७ ॥
अटता धात्रीमखिलामिदमाश्चर्यं मया परं दृष्टम्।
धनदोऽपि नयननन्दन परिहरसि यदुग्रसम्पर्कम् ॥ ७६८ ॥
इदमपरमद्भुततमं युवतिसहस्रैर्विलुप्यमानस्य।
वृद्धिर्भवति न हानिर्यत्तव सौभाग्यकोषस्य ॥ ७६९ ॥
अपरं विस्मयजननं धवलत्वं [8]नापयाति यद्भवतः।
ललनालोचनकुवलयदलत्विषा शबलितस्यापि ॥ ७७० ॥
हृदयेषु कामिनीनामेकोऽनेकेषु वससि येन त्वम्।
जन[9]क कुसुमास्त्रपाणेः पुरुषोत्तम तेन विश्वरूपोऽसि ॥ ७७१ ॥

---

१ 'तादृक्' इति मु० पा०।
२ 'स तावको' इति मु० पा०।
३ 'वसानो' इति मु० पा०।
४ 'च्य' इति मु० पा०।
५ 'दाने रक्तस्य' इति मु० पा०।
६ 'न्तको' इति मु० पा०।
७ 'येति' इति मु० पा०।
८ 'नोपयाति' इति मु० पा०।
९ 'जनकः कुसुमास्त्रभृतस्तेन त्वं इति मु० पा०।

किं वहसि वृथा गर्वं प्रियोऽहमिति योषितां नराधीश ।
कांक्षंति स्म मुरारिं षोडशगोपीसहस्राणि ॥ ७७२ ॥
[1]कार्पण्येन ययाचे मखसमये यो बलिं हृषीकेशः ।
न स भवति समो भवता दानैकनिषण्णहृदयेन ॥ ७७३ ॥
भूमिभृतामुपरिस्थित उन्नतये सकलजीवलोकस्य ।
तृष्णा[2]संतापहरो मेघ इव कदा न दत्तस्त्वम् ॥ ७७४ ॥
वक्रमार्गो भंग[3]युतः कुसृतिपरो गोत्रभेदकरणपटुः ।
गंगाजलप्रवाहः पूज्य[4]दिशा केवलं तव समानः ॥ ७७५ ॥
दुर्व्यवहारोत्पत्तिर्मौ[5]ग्ध्यप्रसरो विवेकिता[6]वसतिः ।
एकस्त्वं दोषज्ञः क्षतीकृतो येन कलिकालः ॥ ७७६ ॥
सुगतोऽपि नाजिविमुखो वृषध्वजोऽपि न विषादितायुक्तः ।
उद्यतशस्त्रोऽपि रिपौ कथमसि सन्ना[7]सिक्तो जातः ॥ ७७७ ॥
सन्मणिरने[8]कभोगो गुरु[9]भारसहः स्थिरात्मतास्थानम् ।
नरदेव चित्रमेतद्यदशेषगुणैस्त्वमाश्लिष्टः ॥ ७७८ ॥
प्रकृतिलघोर्येन कृता जघन्यवर्णस्य गौरवापत्तिः ।
जघनचपला यदार्या स पिङ्गलस्ते कथं तुल्यः ॥ ७७९ ॥

---

१ 'ब्राह्मण्येन' इति ब० पा० ।
२ 'दृष्टः संतापहरो मेघवदासारदानदक्षस्त्वम्' इति मु० पा० ।
३ 'भद्र' इति मु० पा० । ४ 'पुण्य' इति प० वा० ।
५ 'मौर्ख्यप्रसवो' इति ब० पा० । ६ 'प्रसहः' इति मु० पा० ।
७ 'मधासिक्तो' इति मु० पा० । ८ 'र्थक' इति मु० पा० ।
९ 'गुरुतारहः' इति मु० पा० ।

[1]यस्य न जातिर्नाम्ना [2]नार्थज्ञानं न मानसे प्रथमः ।
भवसि भवसागर[3]रत्नं तेनाद्वयवादिना सदृशः ॥ १८० ॥
तत्रापि वृद्धियोगस्त्वय्यपि पुरुषगुणगण[4]ख्यातिः
परिभाषा तत्रापि व्याकरणान्नातिरिच्यसे[5] तेन ॥ १८१ ॥
निर्व्याजस्तवनोऽपि त्यक्ताक्षेपोऽपि निरुपमानोऽपि
[6]सद्रूपकजातिगुणैर्नाथ त्वं गामलंकुरुषे ॥ १८२ ॥
अन्यैव वर्णनैषा भवतु[7] लोकान्तरास्थिता कापि ।
वामो यथैव शत्रुषु मित्रेषु तथैव वामोऽसि ॥ १८३ ॥
पूजयसि येन गुरुजनमभिनन्दसि येन साधुचरितानि ।
प्रीणयसि येन विप्रान्नृपनन्दन तेन तेन वृषल[8]स्त्वम् ॥ १८४ ॥
दैन्यमिदं यच्छ्लाघा क्रियते ते रत्नमपि न समस्य ।
न स [9]बलमकरोद्योषिति भवांस्तु भुंक्ते प्रसह्य रिपुलक्ष्मीम् ॥ १८५ ॥
लावणिकाचाटु[10] वचस्तवकं [11]यल्लाभहेतुरस्माकम् ।
[12]तत्पतति ते स्वरूपे यामि नसः संतु सौख्यानि ॥ १८६ ॥
श्रुत्वा[13]नन्तरमवदद्वन्दिनमभिनंद्य साधुवादेन ।
आस्स्व[14] किमाकुलता ते यास्यसि तुष्टो मया प्रहितः ॥ १८७ ॥

---

१ 'कस्य' इति मु० पा०
२ 'त्व' इति मु० पा० ।　　३ 'न त्वं केन इय ...' इति मु० पा० ।
४ 'स्योक्ति' इति मु० पा० ।　　५ 'वे' इति मु० पा० ।
६ 'संज्ञापक' इति मु० पा० ।　　७ 'दूराज्ञो' इति मु० पा० ।
८ 'भ' इति मु० पा० ।　　९ 'हठम' इति ब० पा० ।
१० 'रामणिका' इति ब० पा० ।　　११ 'पन्ना' इति मु० पा० ।
१२ 'उत्पातितिस्वरूपे यां तीतः संतु सो स्वामी' इति मु० पा०
१३ 'लोत्तरमवदत्तं व...' इति मु० पा० ।　　१४ 'अस्ति' इति मु० पा० ।

पुनरपि पठ तद्युगलं गीतिकयो[1]र्यत्पुरा पठितम् ।
कक्षांतरितेन मम स्थितस्य कुलपुत्रिका[2]वासे ॥ ७८८ ॥
त्वयि वदति साधुवादं वागियमुन्मुद्रिता बुधसमाजे ।
अभिधायेति पपाठ त्रिस्थानविशुद्धनादेन ॥ ७८९ ॥
एका खण्डनकुपिता विरसान्या प्रणय[3]भंगवैलक्ष्यात् ।
काचिन्निकटतरासनमप्राप्य बिभर्ति निर्वेदम् ॥ ७९० ॥
अन्या कलहान्तरिता नवपरिणयलज्जयापरा सहिता ।
रमणीगणमध्यगतः स्मरातुरः किं करोतु बहुजानिः ॥ ७९१ ॥
(सन्दानितकम्)

अभ्युपपत्त्यवबोधकमस्तकचलनं विधाय विकृतभ्रूः ।
नृत्याचार्यमवादीदेतस्मिन्किं सु[4]संगीतम् ॥ ७९२ ॥
स[5] उवाच ततो वणिजो नेतारो यत्र यत्र पात्राणि ।
गाथायतनं दास्यस्तत्र कुतः सौष्ठवं नाट्ये ॥ ७९३ ॥
काचिद्बलिनाक्रान्ता काचिन्न जहाति कामिनं सुचिरम् ।
अन्या पानकगोष्ठ्यां नयति दिनं प्रीतकैः सार्धम् ॥ ७९४ ॥
नोत्सृजति सततमेका पुरुषागमनाशया गृहद्वारम् ।
शूलापालः कथयति लब्धोत्कोचो रजस्वलामपराम् ॥ ७९५ ॥

---

१ 'या यत्पुरा' इति मु० पा० ।  २ 'रामे' इति मु० पा० ।
३ 'गेय' इति मु० पा० ।  ४ 'नु' इति मु० पा० ।
५ 'सोवाचजतवो वणिग्जने नेतरोपत्रपात्राणि। गाथायनं दास्यास्ये तत्र कुतः सौष्ठवं नाट्ये' इति मु० पा० ।

रंगगतापि क्षुद्रा शृणोति यदि[1] परिचितं गृहायातम् ।
उद्दिश्य चापि कार्यं व्रजति ततः प्रकृतमुत्सृज्य ॥ ७९६ ॥
आतारुण्योद्भेदात्कान्ते दृष्टिर्यया[2] न्यस्ता ।
सामाजिकमध्यस्था सा[3] कथमन्यासु याति परभागम् ॥ ७९७ ॥
चेतो[4]वशिता सत्त्वं सत्त्वे सति चारुता प्रयोगस्य ।
न भवति सा वेश्यानामन्या[5]पि पुरुषहृतहृदयानाम् ॥ ७९८ ॥
वयमपि देवनिकेतनमनङ्गहर्षे गते चिद[6]शलोकम् ।
आश्रितवंतो[7]ऽगत्या तीर्थस्थानानुरोधेन ॥ ७९९ ॥
इह तु कदाचित्किंचिद्वृत्तिनिरोधाभिशंकया निरुत्सा[8]हाः ।
रत्नावल्यामेता विदधति करपादविक्षेपम् ॥ ८०० ॥
[9]वत्सेशभूमिकास्था इयमनुकुरुते नरेश्वरवयस्यम्
वासवदत्ताच[10]रितप्रयोगमेषा विडम्बयति ॥ ८०१ ॥
[11]उद्यमसाहित्यवशाच्छोभातिशयेन मदनुबन्धेन ।
अनया प्रसिद्धिराप्ता सिंहलराजात्मजानुकृतौ ॥ ८०२ ॥
विविधस्थानकरचनां परिक्रमं गात्रचलनलालित्यम् ।
काकुविभक्तार्थगिरो रसपुष्टिं वासनास्थैर्यम् ॥ ८०३ ॥

---

१ 'यत्परि' इति मु॰ पा॰ । २ 'येथा' इति मु॰ पा॰
३ 'कथमन्या समुपयाति' इति मु॰ पा॰ । ४ 'चेतोंतरा' इति मु॰ पा॰ ।
५ 'नां मध्यामिषपुरुषनिहितहृदयानाम्' इति ब॰ पा॰ ।
६ 'चिदिव' इति मु॰ पा॰ । ७ 'तो गत्वा' इति मु॰ पा॰ ।
८ 'त्साहा' इति मु॰ पा॰ ।
९ 'वत्सेश्वरभूमिकयोर्द्वयमनुकुरुते नरेश्वर वयस्यः' इति मु॰ पा॰ ।
१० 'द्वितय' इति मु॰ पा॰ ।
११ 'श्रमसादिष्वेवं शोभातिशयेन मदनुबन्धेन' इति मु॰ पा॰ ।

सात्त्विकभावोन्मीलनमभिनयमनुरूपवर्तनाभरणम् ।
मिश्रामिश्रे [1]वाद्ये लयाच्युतिं वर्णयंति मंजर्याः ॥ ८०४ ॥

(यु[2]गलकम्)

एषाभिधानकीर्तन[3]गुणितस्वशरीरकुसुमशरदोषा ।
सहसोद्भिन्नमनोभवभावदशा सिंदुवारविवरेण ॥ ८०५ ॥
पश्यंती वत्सेश्वरमनुकार्यानु[4]करणभेदपरिमोषम् ।
माधुर्ध्वनिमुखराननसामाजिकजनमनःसु विदधाति ॥ ८०६ ॥

(युगलकम्)

वत्सपतिमालिखंती कामाव[5]स्था क्रमेण भजमाना ।
वेपथुपुलकस्वेदैरावहति विसंष्ठुलं हृत्तम् ॥ ८०७ ॥
सदृशेऽप्यनुभावगणे करुणरसं विप्रलम्भतो भिन्नम् ।
दर्शयति निरभिकांक्षितमु[6]द्भवनगोचरापन्ना ॥ ८०८ ॥
तस्मि[7]न्निदर्शतीत्थं मंजरिकां साभिलाषमवलोक्य ।
पस्पर्श राजपुत्रः किम[8]साविति वेत्रदण्डेन ॥ ८०९ ॥
बुद्ध्वाथ तस्य भावं प्रमा[9]रयन्युवतिसंकथाकेलिम् ।
न्यक्कुर्वन्वारवधूः सचिवः प्रशशंस बन्धकीगमनम् ॥ ८१० ॥
दाररतिः संततये व्याधिप्रशमाय चेटिकाश्लेषः ।
तत्खलु सुरतं सुरतं कृच्छ्रप्राप्यं यदन्यनारीषु ॥ ८११ ॥

---

१ 'नाद्ये लयच्युतिं वर्णयित्व' इति मु० पा० ।
२ मुद्रितपुस्तके नास्ति ।
३ 'नाशितशरीरकुसुमशरबोधे' इति ब० पा० ।
४ 'कृतिरमन्दपरितोषम्' इति मु० पा० ।
५ 'स्थाक्रमेण' इति मु० पा० ।
६ 'सौख्यं ननु गोचरापन्ना' इति मु० पा० ।
७ 'अस्मिन्दर्शयती' इति मु० पा० ।
८ 'किमु मामिति' इति मु० पा० ।
९ 'संशमय' इति मु० पा० ।

दुर्भर्तृकरास्फालनमलिनीक्रियमाणशोभमनुदिवसम् ।
तुङ्गमपि पतितकल्पं स्तनशालिनि [1]तव पयोधरद्वन्द्वम् ॥ ८२० ॥
पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् ।
[2]तुलयंति न लवांशं त्वरितक्षणचौर्यसुरतस्य ॥ ८२१ ॥
[3]सहसा संकटवर्त्मन्यवितर्कितसंमुखागतेना[4]पि ।
अभिलषितेनोद्वृष्टकमनन्यशुभकर्मणा[5] लभ्यम् ॥ ८२२ ॥
प्रीतिः किल निरतिशया [6]स्वर्गः परलोकचिन्तकैर्गदितः[7] ।
तस्यास्तु जन्मलाभो हृदयेप्सितपुरुषसंयोगात् ॥ ८२३ ॥
अतटस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।
ते शोकक्लेशरुजां केवलमुपयांति पात्रतां मन्दाः ॥ ८२४ ॥
किं प्रतिकूला ग्रहगतिरुत परिणत[8]मन्यजन्मदुश्चरितम् ।
स्वानुष्ठाना[9]भ्यसनं किं वा तस्यात्मयोनिहतकस्य ॥ ८२५ ॥
येन [10]तपस्वी स युवा स्तौति [11]समीरं त्वदंगसंस्पृष्टम् ।
त्वत्पादाक्रान्तभुवे स्पृहयति ककुभं [12]त्वदाश्रितां नमति ॥ ८२६ ॥
ध्यायति युष्मद्रूपं [13]त्वन्नामकवर्णमालिकां जपति ।
एकाग्री[14]कृतचेतास्त्वदङ्गतः सौख्यसिद्धिमभिकांक्षन् ॥ ८२७ ॥

( अंतर्विंश[15]षकम् )

---

१ 'तत्' इति मु० पा० । २ 'तुलयति नहि लवांशं' इति मु० पा० ।
३ 'विशा' इति ब० पा० । ४ 'न्य' इति ब० पा० । ५ 'णां' इति ब० पा०
६ 'नेदुः' इति मु० पा० । ७ 'ता' इति मु० पा० ।
८ 'मात्मदुश्चरितम्' इति मु० पा० । ९ 'नव्य' इति मु० पा० ।
१० 'वरस्त्रीषु' इति मु० पा० । ११ 'शरीरं' इति मु० पा० ।
१२ 'त्वदीक्षितां' इति मु० पा० । १३ 'कमंच' इति मु० पा० ।
१४ 'स्त्री' इति मु० पा० । १५ 'अंतर्युगलकम्' इति मु० पा० ।

उत्सृष्टसर्वकार्यस्तिर्यग्ग्रीवं विलोकयन्भवती[1]म् ।
कुरुते गृहाग्ररथ्यां यातायातैः प्रतानवताम् ॥ ८२८ ॥

दृष्टोऽस्मि तया सुचिरं गेहाभ्याशे परिभ्रमन्स्पृहया ।
संदेश एष दत्तः प्राभृतमेतत्तव[2] प्रहितम् ॥ ८२९ ॥

शुष्यति मालभमाना भवत्कृते वेश्मनिर्गमावसरम् ।
इति चतुरशठस्त्रीभिर्विलुप्यते त्वदपदेशेन ॥ ८३० ॥

( अन्त्ययुगलकम् )

किं वा कथितैरधिकैरस्यानाविष्टचेतसस्त्वस्याः[3] ।
अनुतिष्ठ यथायुक्तं[4]त्वत्तो[5]नाशस्य जीवरक्षा च ॥ ८३१ ॥

( दूतीवचनं महाकुलकम् )

कुलपतनं जनगर्हां नरकगतिं प्राणितव्यसन्देहम् ।
अङ्गीकरोति तत्क्षणमबला परपुरुषमभियान्ती ॥ ८३२ ॥

स तु लिखति दासपत्रं त्यजति कुटुम्बं ददाति सर्वं[6]स्वम् ।
यावन्न भवति पुरतः परयुवतिः प्रोज्झितावरणा ॥ ८३३ ॥

दृष्टं यद्द्रष्टव्यं व्यपयातं कौतुकं विदितमन्तः ।
इति याति मनसि कृत्वा विहितविधेयस्ततस्तूर्णम् ॥ ८३४ ॥

सापि च्छिन्नाच्छोटनगृहीतमुक्ता विलोकयन्त्याशाः ।
विशति गृहं संत्रस्ता सर्वत आशङ्किता सवैलक्ष्य[7]म् ॥ ८३५ ॥

---

१ भवति' इति मु० पा० ।
२ 'त्वया दत्तम्' इति मु० पा० ।
३ 'स्य' इति ब० पा० ।
४ 'शोभा' इति मु० पा० ।
५ 'शठ' इति मु० पा० ।
६ 'सर्वं च' इति मु० पा० ।
७ 'क्ष्या' इति ब० पा० ।

नवचारिचभ्रंशा[1] सुरचितकुलटोदितेषु नो निपुणा ।
पृष्टा क्व गतासि त्वं न क्वचिदिति सम्भ्रमाद्रूते ॥ ८३६ ॥

एते[2] दोषा बहवः पुरुषा अपि चपलकौतुकाः[3] प्रायः ।
त्वं च ग्रहेण लग्ना कार्यविमूढाच तिष्ठामि ॥ ८३७ ॥

इति दोलायितहृदया स्थिरीकृता[4]भ्यस्तकर्मणा दूत्या ।
दृष्टे[5]ति शङ्कमाना पदे पदे[6] चलति पर्णेऽपि ॥ ८३८ ॥

सर्वत्र[7] विक्षिपन्ती मुहु[8]र्मुहुस्त्रकिततरलिते नेत्रे ।
प्राप्ता संकेतभुवं शतगुणितमनोरथाकृष्टा ॥ ८३९ ॥

भयशृङ्गारव्रीडामिश्रीभूतानुभावसन्दो[9]हम् ।
जनयन्ती लोलांशुकदृष्टादृष्टांसकुचनाभिः ॥ ८४० ॥

नीवीश्लथनारम्भं[10] निरुन्धती न[11] न न यामि यामीति ।
निभृ[12]तास्फुटाभिधानैः पल्लवयन्ती स्मरस्य कर्तव्यम् ॥ ८४१ ॥

नयनीवा[13]न्तर्विलयं ग्रसमाना[14] सर्वगात्राणि ।
यं[15] श्लिष्यतेऽन्ययोषा तिक्तं तस्यामृतं पुरतः ॥ ८४२ ॥

(नायिकावचनं महाकुलकम्)

---

१ 'शाल्मु...' इति ब० पा० ।
२ 'मितदोषे. बहुदोषाः' इति मु० पा० । ३ 'कप्रायाः' इति मु० पा० ।
४ 'ता न्य ...' इति मु० पा० । ५ 'ष्टाभिशङ्क ...' इति मु० पा० ।
६ 'स्वनुदिक्षु' इति मु० पा० । ७ 'पदे पदे' इति मु० पा० ।
८ "न्देहम्' इति मु० पा० । ९ 'ष्टतक्षतिक्षष्टा सकुचनाभिः' इति मु० पा० ।
१० 'म्भ' इति मु० पा० । ११ 'तं न यामि यामीति' इति मु० पा० ।
१२ 'चि' इति मु० पा० । १३ 'लेविंनयं' इति मु० पा० ।
१४ 'ने वार्धसर्व...' इति मु० पा० । १५ 'संश्लिष्यते' इति मु० पा० ।

न कृतं तव रहसि [1]पुरो वा व्यावृत्तकण्ठकुण्ठया वाचा ।
गेहस्वामितिरस्कृतिनिष्पादितदुःखवेगनिर्वहणम् ॥ ८४३ ॥

उपधानीकृत्य भुजावन्योन्यं निर्विशङ्कमावाभ्याम् ।
संवलि[2]तोरु न सुप्तं शिथिलाङ्गं रतिविमर्दखिन्नाभ्याम् ॥ ८४४ ॥

आत्मगृहादानीतं प्रच्छाद्य स्वादुभोजनं विजने ।
स्वकरेण मया दत्तं निर्वृतहृदयेन नाशितं भवता ॥ ८४५ ॥

न कृता परिचरचर्या न च भुक्तं [3]त्वच्छरीरमपर्यन्तम् ।
दृष्टादृष्टभ्रष्टा क्व यामि किं वा करोमि दुर्जाता ॥ ८४६ ॥

अवगुण्ठनवि[4]नयरतौ स्वैरालापं च मन्दसंचारम् ।
सम्प्रति मम पापायाः करपिहितमुखा हसन्ति तत्त्व[5]ज्ञाः ॥ ८४७ ॥

यासामासीत्सख्यं मया समं समवयःकुलस्त्रीणाम् ।
ता वारयंति मत्तः कु[6]सङ्ग इति तन्नियन्तारः ॥ ८४८ ॥

धिग्वादान्परिजनतः सहमाना [7]मन्युरोधनतवदना ।
तिष्ठामि निरभिमाना निजनिर्मितदोषदौर्बल्यात् ॥ ८४९ ॥

सद्भिर्विधीयमानं प्रसङ्गपतितं पतिव्रतास्तवनम् ।
हृदयेन दूयमाना मूढा सीदामि शृण्वन्ती ॥ ८५० ॥

आसन्न उपविशन्तो मन्दा[8]क्षा मां निषेद्धुमसमर्थाः ।
अन्योन्यमीक्षमाणा ज्ञातिजनाः सङ्कुचन्ति भुञ्जानाः ॥ ८५१ ॥

---

१ 'तो वा विघ्नकम्पया' इति मु० पा० ।  २ 'रि' इति मु० पा० ।
३ 'मच्छरीरपर्यङ्कम्' इति मु० पा० ।  ४ 'नयविरति' इति मु० पा० ।
५ 'भूमिज्ञाः' इति ब० पा०  ६ 'कुसंगतिं तन्नियंतारः' इति मु० पा० ।
७ 'मुखरथास्यधोवदना' इति मु० पा० ।  ८ 'मां दाक्षिण्यान्नियंतु' इति मु० पा० ।

प्रकटीकृता[1]स्त्वयैवं क्षणमात्रममुञ्चता गृहोपान्तम् ।
अस्मासु[2] दृशं मग्नां प्रेमस्निग्धाम[3]नुद्धरता ॥ ८५२ ॥
परगृहविनाशपिशुनाः सुभगंमन्याभिरूपकृतदर्पाः ।
कृकलासतुल्यरा[4]गा भवन्ति युष्मद्विधा एव ॥ ८५३ ॥
अनभीष्टव्यवहारप्रभवशुचा[5] पीडिताच्चरा इत्थम् ।
सोपालम्भा विज[6]ने धन्याः शृण्वन्ति बन्धकीवाचः ॥ ८५४ ॥
(कुलकम्)
परतरुणीस[7]ङ्गावस्नेहार्पितनयनभागदृष्टस्य ।
वेश्यारचितविलासाः कथिताः पुरतः पुराणतृणतुल्याः ॥ ८५५ ॥
उपव[8]नरचितमहोत्सव आराधितदेवताविशेषाणाम् ।
वचनमपि प्रेमार्द्रं स्वैरिण्याः श्रवणमेति पुण्यवताम् ॥ ८५६ ॥
का गणना विषय[9]वशे पुंसि वराके [10]पराङ्गनास्पृहया ।
व्याजेन वीक्षमाणा ध्यानधियां स्पृशति सज्ज्ञानम् ॥ ८५७ ॥
शिरसा रचितांजलयो दधति निदेशं त्रिविष्टपे गणिकाः ।
परदाररसाकृष्टस्तथापि भेजे शचीपतिरहल्याम् ॥ ८५८ ॥
अप्सरसः किं न वशा वैदग्ध्यवतां च किं न धौरेयः ।
येन चकारासक्तिं गोविन्दो गोपदारेषु ॥ ८५९ ॥

---

१ 'ता लयैवं' इति ब० पा० । ३ 'स्सुहृगां मध्ये' इति मु० पा० ।
२ 'न' इति मु० पा० । ४ 'भागा' इति मु० पा० ।
५ 'वथा' इति मु० पा० । ६ 'वचनं' इति मु० पा० ।
७ 'सञ्चार' इति मु० पा० । ८ 'उपवनयति रतिमहोत्सवा' इति मु० पा० ।
९ 'विषमसक्ति' इति ब० पा० । १० 'वरा' इति मु० पा० ।

त्रैलोक्यगता वेश्याः स्वाधीना यातुधाननाथस्य ।
तदपि जहार कलत्रं दशरथतनयस्य रामस्य[1] ॥ ८६० ॥
अथ मञ्जर्या जननी निजपक्षसमर्थने कृतोत्साहा ।
आक्षेप्तुमाचचक्षे नृपसुतसचिवाश्रितां[2] वाचम् ॥ ८६१ ॥
घटयुवतिषु प्रगल्भो [3]नागरिकादर्शनक्षतपुंस्त्वः ।
ग्रामोषितोऽविदग्धो निन्दति गणिकां भवद्विधोऽवश्यम् ॥ ८६२ ॥
नार्द्रयति मनः पुंसामवगाहितमीनकेतु[4]शास्त्राणाम् ।
नखदशनक्षतहीनं जीवत्पतिबन्धकीसुरतम् ॥ ८६३ ॥
स्थापय घटकं तावत्कुरु भूमितले तृणैः समास्तरणम् ।
सुरतोपक्रम ईदृक्[5] प्रायो ग्रामीणतरुणमिथुनानाम् ॥ ८६४ ॥
बहलोशीरविलिप्तः[6] स्थितजूटकको[7]णमल्लिकामाल्यः ।
पामरनार्या दृष्टः स्मरोऽहमिति मन्यते विटो[8] ग्राम्यः ॥ ८६५ ॥
गृहकर्मकृतायास[9]प्रक्लिन्नां सलिलकार्यनिर्याताम् ।
उपपतिरुपैति हर्षान्निशागमे पामरीं प्राप्य ॥ ८६६ ॥
कूप[10]क्षिप्तघटाया नार्यास्तत्काष्ठनिहितचरणायाः ।
वलितग्रीवं वीक्षितमुक्ष[11]यति मनो ग्रामवासिनां यूनाम् । ८६७॥

---

१ 'भद्रस्य' इति मु० पा० ।  २ 'तं वाक्यम्' इति ब० पा० ।
३ 'सा' इति मु० पा० ।  ४ 'ना स्त्रीणाम्' इति मु० पा० ।
५ 'ग्रामीणकतरुणमिथुनानाम्' इति मु० पा० ।
६ 'लुप्तस्थि' इति मु० पा० ।  ७ 'कदम्ब' इति मु० पा० ।
८ 'टपाम्यः' इति मु० पा० ।  ९ 'सां प्र' इति मु० पा० ।
१० 'कूपावतारितघटाया नार्याः काष्ठ ...' इति ब० पा० ।
११ 'मति ग्रामवासिनो यूनः' मु० पा० ।

लग्नोऽस्मि यत्र गात्रे कथमपि दैवेन देवयात्रायाम् ।
अद्यापि तन्न मुञ्चति पुलकोद्गमकण्टकं तस्याः ॥ ८६८ ॥

उच्चेतुं [1]कर्पासं प्रविष्टया गह[2]नवाटिकां शून्याम् ।
टंकारितेन संज्ञा कृता तया त्वं तु[3] वेत्सि नो मूर्खः ॥ ८६९ ॥

आलिंगितमुसलायास्त्वय्येव निविष्ट[4]चक्षुषस्तस्याः ।
आवृत्त्या भ्रमति पुरो जातः खलु शालिक[5]ण्डने विघ्नः ॥ ८७० ॥

त्वां लो[6]ष्टमाक्षिपन्तं पार्श्वस्थैः स्तूयमानसामर्थ्यम् ।
गृहकर्तव्यं त्यक्त्वा [7]सापश्यद्द्वारटरन्ध्रेण ॥ ८७१ ॥

त्वयि मार्गनिकटवर्तिन्यविचेतितखेदया तया सुभग ।
प्रत्यासन्नगृहेष्वपि कृतः प्रसह्य स्मरातुरो लोकः ॥ ८७२ ॥

इति चतुरदूतिकोदित[8]वर्धितसौभाग्यगर्वपूर्णस्य ।
ऊर्मिसहस्रोन्नमितं भवति मनो ग्राम्यषि[9]ङ्गस्य ॥ ८७३ ॥

विनिवार्य तत्प्रवर्तितवाक्य[10]विकासं नतोत्तमाङ्गेन ।
श्रीसिंहभटस्य सुतं[11] समुवाच वचोऽथ नर्तकाचार्यः[12] ॥ ८७४ ॥

नायकभूमौ भवतः कुशीलवाः कोहलादयो मुनयः ।
अप्सरसः स्त्रीला[13]स्ये गा[14]न्धर्वे कमलजन्मनस्तनयः ॥ ८७५ ॥

---

१ 'का' इति मु० पा० ।
२ 'शून्यवाटिकागहनम्' इति मु० पा० ।
३ 'च' इति मु० पा० ।
४ 'चेतस' इति मु० पा० ।
५ 'ख' इति ब० पा० ।
६ 'बिल्वकं क्षिपतं' इति ब० पा० ।
७ 'पश्यति सा द्वाररन्ध्रेण' इति मु० पा०
८ 'त उपचित ...' इति मु० पा० ।
९ 'षिङ्ग' इति मु० पा० ।
१० 'च' इथि मु० पा० ।
११ 'तः' इति मु० पा० ।
१२ 'र्यम्' इति मु० पा० ।
१३ 'नाट्ये' इति ब० पा० ।
१४ 'गन्धर्वः कम ...' इति ब० पा० ।

सुषिरस्वरप्रयोगे[1] प्रतिपादनपण्डितो मतङ्गमुनिः।
यदि रञ्जयन्ति[2] हृदयं भवतो भूमिस्पृशां[3] कुतः शक्तिः॥ ८७६॥
अभ्यधिकं धृष्टत्वं प्रायेण हि शिल्पजीविनो भवति।
आश्रितनर्तकवृत्तेर्विशेषतो विजितरङ्गस्य॥ ८७७॥
विज्ञापयाम्यतस्त्वां निर्मित[4]नाट्यप्रजासृजा मदृशम्।
अवलोकयाङ्कमेकं मा भवतु मम श्रमो वन्ध्यः॥ ८७८॥
इति कथयन्नरभर्तुः पुत्रेण स चोदितो भु[5]वोन्नतया।
रचिते सकलातोद्ये नियोजयामास सू[6]त्रधृतम्॥ ८७९॥
वांशिकदत्तस्थानक[7] उद्ग्राहितभिन्नपंचमे सम्यक्।
प्रावेशिक्या[8] ध्रुवया द्विपदे[9] ग्रहणान्तरे[10] ऽविशत्सूत्री॥ ८८०॥
उत्साहभावयुक्तः सामाजिकहृदयरंजनं कु[11]र्वन्।
कविनैपुणवत्सेश्वरचरित[12]स्वविधेयदाक्ष्यमामथ्या॥ ८८१॥
अष्टकलापरिमाणां ध्रुवां[13] परिक्रम्य तालजययुक्ताम्।
आहूय नटीं कृत्वा तया समं स्वगृहकार्यसंलापम्॥ ८८२॥
सूचितपात्रागमनः किंचिद्गत्वा पदानि ल[14]लितानि।

---

१ 'अप्रतिपादन...' इति ब० पा०।
२ ३ 'यदि रंजयति भवतो भूमिं स्पृशतां' इति मु० पा०।
४ 'नरेन्द्रनाट्यजामदृशम्' इति मु० पा०। ५ 'भु' इति मु० पा०।
६ 'स प्रऽतम्' इति मु० पा०। ७ 'कतङ्गावित' इति मु० पा०।
८ 'श्रवमाने' इति मु० पा०। ९ 'दोष' इति मु० पा०।
१० 'रे विशति स्त्रीम्' इति मु० पा०। ११ 'कुर्वत्' इति मु० पा०।
१२ 'तस्य विधे...' इति मु० पा०।
१३ 'च परिकल्प्य तालजययुक्ताम्' इति मु० पा०।
१४ 'निपुणानि' इति मु० पा०।

निश्चक्राम गृहिण्या सार्धं निःसरणगीतेन ॥ ८८३ ॥
आश्रित्य [1]कथोद्घातं प्रविवेश ततः[2] सविस्मयोऽमात्यः ।
दु[3]र्घटसंघटनेन क्षितिनाथस्योदयेन मुदितश्च ॥ ८८४ ॥
प्रासादमारुहन्तं कुसुमायुधपर्वचर्चरी द्रष्टुम् ।
निर्दिश्य वत्सराजं समनंतरकार्यसिद्धये निरगात् ॥ ८८५ ॥
अथ[4] विशति स्म नरेन्द्रः प्रासादगतः समं वयस्येन ।
अवलोकयन्प्रमो[5]दं [6]प्रमुदितचेताः स्वसौ[7]ख्यसम्पत्त्या ॥ ८८६ ॥
विस्मयभावाक्रष्टः प्रोत्फुल्लविलोचने ततो विसृजन् ।
नृत्यति पौरजनौघे प्रोवाच वयस्य पश्य पश्येति ॥ ८८७ ॥
तुल्यशिशुतरुणवृद्धं समगुप्तागुप्तयुवतिपरिचेष्टम् ।
अगणितवाच्यावाच्यं क्रीडन्ति[8] जनाः प्रवृद्धहर्षरसाः ॥ ८८८ ॥
पिष्टातकपिंजरितं रचि[9]तोचितविविधकुसुमनिर्यूहम् ।
गाथायाससमुत्थितवक्त्रनिःश्वासप्रकीर्णपद[10]गीतम् ॥ ८८९ ॥
तूर्यरवव्यामिश्रितकरत[11]लतालोद्गुजं प्रनृत्यन्तम् ।
मुक्त[12]रपि जातस्खलनं संदर्शितदार्ढ्यसौष्ठवे [13]स्थविरम् ॥ ८९० ॥

---

१ 'पदो' इति मु० पा० । २ 'तसः' इति मु० पा० ।
३ 'दुर्घटघटनेन क्षितिनाथस्योदयं नमुद्दिश्य' इति मु० पा० ।
४ विस्मयति । ५ 'प्रगाढं' इति मु० पा० ।
६ 'स' इति मु० पा० । ७ 'सैन्य' इति मु० पा० ।
८ 'क्रीडति जनता प्रवृद्धहर्षरसा' इति मु० पा० ।
९ 'रुचिरोच्छ्रित' इति मु० पा० । १० 'पटवासम्' इति मु० पा० ।
११ 'तालैरनुगतं प्रनृत्यंतम्' इति मु० पा० ।
१२ 'वपवत्स्खलनं' इति मु० पा० । १३ 'सुचिरम्' इति मु० पा० ।

अस्तु वसन्तः सततं स्वाधीनाभीष्टजनसमाश्लेषः[1] ।
इति गायन्त्यौ रभसादालिंगति मदवशात्तरुणौ ॥ ८९१ ॥
क्रीडन्त्या भ्रमरहितं शृंगकसलिलेन ताडितस्तरुणः ।
सीमंतिन्या गणयति तुष्टात्मा सुभगमात्मानम् ॥ ८९२ ॥
मग्ने लज्जासेतौ पर्वावसरेण कुलवधूवदनात् ।
अम्लौ[3]कोकिलकौघो[4] निर्यातः केन वार्यते प्रसरन् ॥ ८९३ ॥
तुल्यव्यापारगिरां ललनानां देवनप्रसक्तानाम् ।
आर्यानार्यविगमं वद[5]नाहृतिजालिका कुरुते ॥ ८९४ ॥
अथ सहचरनिर्दिष्टे मद[6]स्खलच्चरणविघटिताभिनयम् ।
वासवदत्ताप्रहिते नृत्यत्यौ [7]विविशतुस्तन्व्यौ ॥ ८९५ ॥
दर्शितसरोजवर्तनसा[8]म्याभिनये शरेऽभि[9]नेतव्ये ।
वि[10]दधाने वीरदृ[11]शावायुधमार्गं[12] समाश्रित्य ॥ ८९६ ॥
चलितनयनप्रवृत्तिः कौतुकहृतमानसो नराधिपतिः ।
निजगाद निर्भरमहो क्रीडितमनयोर्विलासिन्योः ॥ ८९७ ॥
करपीडनोपमर्दव्यतिकरसम[13]ये कदर्थ्यमानोऽपि ।
स्तनमंडले स्थितोऽहं त्वं पुनराकृष्य कुत्रचित्क्षिप्तः ॥ ८९८ ॥

---

१ 'षात्' इति मु० पा० ।
२ 'गायति' इति मु० पा० । ३ 'अम्लानौ' इति मु० पा० ।
४ 'घे निर्याते केन वार्यते प्रसरः' इति मु० पा० ।
५ 'मदनाहृतिजापिका' इति मु० पा०
६ 'मदंच्चरणघटिताभिनयना' इति मु० पा० । ७ 'प्रविशत' इति मु० पा०
८ 'गात्र' इति मु० पा० । ९ 'चि' इति मु० पा० ।
१० 'नि' इति मु० पा० । ११ 'दृशासा' इति मु० पा० ।
१२ 'चां' इति मु० पा० । १३ 'समकद...' इति मु० पा० ।

अद्युना[१]न्तरयसि मामिति कोपादिव वाणवारमभिराम[२]म्।
वक्रचित्रपदन्यासैर्व[३]ल्गंत्या हंति हार उच्छ[४]लित: ॥ ८९९ ॥
चूतलता[५] धम्मिल्लस्थानच्युतशेखरं[६] दधौ श्लाघ्यम्।
अद्युतपतन्नि[७]र्यूहं न ले[८]षा मदनिकावेणी: ॥ ९०० ॥
स्तनभारावनतस्य प्रतनोर्मध्यस्य नास्ति तेऽपेक्षा।
इत्यमिव पादलग्नौ क्रीडन्त्या नूपुरौ रमत: ॥ ९०१ ॥
वहति स्म यं[९] नितम्बं कथमपि कृच्छ्रेण[१०] मंदसंचारा[११]।
कलयति तं[१२] तूललघुं जयति मनोजन्मनो महिमा ॥ ९०२ ॥
उदयनममनुज्ञात:[१३] प्र[१४]ननर्त वमन्तकोऽपि मुदितात्मा।
हास्य[१५]चयाभिरामं चर्चरि[१६]तालेन तन्मध्ये ॥ ९०३ ॥
धीरोद्धतललितपदै:[१७] क्रीडित्वा ते चिराय नरनाथम्।
प्रद्योतस्य सुतायाः सन्देशमथोचतु: समुपगम्य ॥ ९०४ ॥
आदिशति देव देवीत्यर्धोक्ते[१८] सलज्जमन्योन्यम्।
अवलोक्य मुखं नहि नहि विज्ञापयति प्रणम्य विनयेन ॥ ९०५ ॥
मकरध्वजस्य पूजां त्वयाद्यसरोजसन्निधौ कर्तुम्।
पृथिवीमण्डलमण्डन समीहते मे मनोवृत्ति: ॥ ९०६ ॥

१ 'त्व' इति मु० पा०।
२ 'माम्' इति मु० पा०।
३ 'वदंत्या' इति मु० पा०।
४ 'च' इति ब० पा०।
५ 'ताधमिल्लस्थान...' इति मु० पा०।
६ 'रेन्दवे' इति मु० पा०।
७ 'नि' इति मु० पा०।
८ 'च समदनिका वाणीम्' इति मु० पा०।
९ 'यानि तत्वं' इति मु० पा०।
१० 'सपाणिक्राच्छ्रण' इति मु० पा०।
११ 'रम्' इति मु० पा०।
१२ 'तन्नूनमयं' इति मु० पा०।
१३ 'तो' इति मु० पा०।
१४ 'नयमन्तर्न' इति मु० पा०।
१५ 'दास्यांशया' इति मु० पा०।
१६ 'कार्येन' इति मु० पा०।
१७ 'दै:' इति मु० पा०।
१८ 'त्वयच: स...' इति ब० पा०।

प्रियरतिभोगो मदनो दयितवसन्तो जनस्य [1]मनसि वसन् ।
भावेन भवान्पूज्यो लोकस्त्विद्धा तु कुसुमशरपाणिः ॥ ८०७ ॥
इति दत्त्वा संदेशं प्रकृतिवयःकालसमुचितं भ्रान्त्वा ।
ते मदमदनाविष्टे बभूवतुर्जवनिकान्तरिते ॥ ८०८ ॥
अपनीततिरस्करिणी ततोऽभवद्वत्सरूपा समं देव्या ।
अविदितरत्नावल्या पूजोचि[2]तवस्तुहस्तयानुगता ॥ ८०९ ॥
अथ दृ[3]ष्ट्वा सागरिकां प्रमादितां[4] परिजनस्य निन्दित्वा ।
कांचनमालामवदन्नृपमहिषी जातसंक्षोभा ॥ ८१० ॥
प्रेषय कन्यामेनामवरोधं त्वं गृहाण कुसुमादि ।
यावन्न भवति विषये वीक्षणयोर्भूमिनाथस्य ॥ ८११ ॥
उपगम्य ततश्चेटी तामभ्यवदत्क्रिमर्थमायाता ।
मेधाविनीं विमुच्य व्रज तस्मिन्मा विलम्बस्व ॥ ८१२ ॥
विहिते देव्यादेशे मनसीदं संनि[5]धाय सा तस्थौ ।
विहगौ सुसंगताया हस्ते निहितौ[6] मनोभवसपर्याम् ॥ ८१३ ॥
अवलोकयामि तावत्तिरोहिता सिंदुवारविटपेन ।
तातान्तःपुरिकाभिर्यथार्च्यते किं त[7]थैतदुत नेति ॥
सन्दानितकम् ॥ ८१४ ॥

---

१ 'सदसि वसनाम्' इति मु० पा० ।
२ 'दृष्ट्वा' इति मु० पा० ।
३ 'वि' इति मु० पा० ।
४ 'दित' इति मु० पा० ।
५ 'दतः' इति मु० पा० ।
६ 'दत्त्वा' इति मु० पा० ।
७ 'तथैव नो वेति' इति ब० पा० ।
८ मुद्रितपुस्तके न विद्यते ।

पिण्डीकृतमिव रागं हृच्छ्रयमिव लब्धविग्रहोत्कर्षम् ।
समुपेत्य वत्सराजं जगाद सा जयतु[1] जयतु देव इति ॥ ९१५ ॥

परिभुक्तमपि नवत्वं शृंगाररसं मदनपर्वणानीतम् ।
भजमानो भजमानां स्वागतवचसाभिनन्द्य तामूचे ॥ ९१६ ॥

भर्गत्रिलोचनपावकदाहाभ्य[2]धिकां मनोभवो मन्ये ।
प्राप्स्यति तव करसङ्गमसुखविरहसमुत्थितां पीडाम् ॥ ९१७ ॥

अ[3]थ मन्मथमभ्यर्च्य क्षितिनाथं तदनु स[4]मधिकं तस्याम् ।
परमां मुदं वहन्त्यां विग्रहवन्मदनमनसि [5]कन्यायाम् ॥ ९१८ ॥

शृंगाररससमुद्रे सोत्कलिकं निपतिते तथा नृपतौ ।
तारमधुरस्फुटार्थं नग्नाचार्यः पपाठ नेपथ्ये ॥ ९१९ ॥ (युग[6]लकम्)

नयनानन्दमखण्डितमण्डलमभिराममस्ततरश्मिमिव ।
सायंतन आस्थाने क्षितिपतयस्त[7]स्युरुदयनं द्रष्टुम् ॥ ९२० ॥

उच्चारितेऽ[8]थ नाम्नि त्रिदशम[9]तौ तत्क्षणं[10] व्यपेतायाम् ।
उत्पन्नविस्मयर[11]तिर्निदधे नरभर्तुरात्मजा हृदये ॥ ९२१ ॥

'अयमुदयनः स राजा तातः सत्कृत्य मां ददौ यस्मै[12] ।
हन्त परप्रेषणमपि न निष्फलं साम्प्रतं जातम् ॥ ९२२ ॥

---

१ 'जयति देव इति' इति मु० पा० । २ 'त्य' इति मु० पा० ।
३ 'सा' इति मु० पा० । ४ 'साधिक' इति मु० पा० ।
५ 'हवन्मनसि कन्यायास्' इति मु० पा० । ६ मुद्रितपुस्तके न दृश्यते ।
७ 'सन्त्युदयनं' इति मु० पा० । ८ 'ऽन्यनाम्नि' इति मु० पा० ।
९ 'पतौ' इति मु० पा० । १० 'तत्क्षणाच्युतपदायाम्' इति मु० पा० ।
११ 'परा मानं दधे' इति मु० पा० । १२ 'यस्मिन्' इति मु० पा० ।

यावन्न वेत्ति कश्चित्तावदितस्त्वरितमेव निर्यामि' ।
इति कथमपि नायकतो हृत्वा दृशमुत्ससर्ज रङ्गभुवम् ॥ ८२३ ॥
कंदर्पमहमहोत्सवहृतहृदयैर्नावधारितोऽस्माभिः ।
संध्यातिक्रमकालः पश्य त्वं प्रियवयस्यक तथा हि ॥ ८२४ ॥
उदयत[1]टान्तरितमियं प्राची सूचयति दिङ् निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ ८२५ ॥
देवि त्वन्मुखपद्मः पद्मान्विदधाति पश्य विच्छायान् ।
अलयोऽपि लज्जिता इव शनैः शनैस्तदुदरेषु लीयन्ते ॥ ८२६ ॥
एवमभिधाय चित्रैश्चरणन्यासैः परिक्रमं कृत्वा ।
निष्क्रामि[2]क्या ध्रुवया विनिर्ययौ नायकोऽपि सह सर्वैः ॥ ८२७ ॥
(कला[3]पकम्)

अंके जातसमाप्तौ गीतातोद्यध्वनौ च विश्रान्ते ।
प्रेक्षणकगुणग्रहणं नृपसूनुः प्रवृते कर्तुम् ॥ ८२८ ॥
नाट्यप्रयोगतत्त्वे मतयो न विशन्ति मादृशां प्रायः ।
वाहनयानपदातिग्रामादिककार्यदत्तहृदयानाम् ॥ ८२९ ॥
आस्ते लि[4]खितो ग्रामो गृहाण तं सत्प्रदेशबद्धभूमिम् ।
वासय दत्त्वा[5]वासं भवसि तत[6]ष्ठक्कुरो दिवसैः ॥ ८३० ॥
हतजीवनसंस्थो हि त्वमपि किमर्थं करोषि विज्ञप्तिम् ।
अर्पय वा यदि नेच्छसि कुरु स्थितिं हस्तदानेन ॥ ८३१ ॥

---

१ 'नग्ना' इति मु० पा० । २ 'मत्पादुकया' इति मु० पा० ।
३ मुद्रितपुस्तके नास्ति ।
४ 'स्या लिखितोऽयं गृहाण सर्वं प्रदेशबद्धभूमिम्' इति मु० पा० ।
५ 'तत्रावासं' इति मु० पा० । ६ 'ततस्तक्कुरो' इति मु० पा० ।

न च पत्तयो न मन्त्रिणे[1] च पौरजनस्तथाप्यसंतुष्टः ।
लभमानोऽपि मदायं चिरंतनत्वाभिमानेन ॥ ८३२ ॥
विज्ञप्तिकोन्मुखत्वं दूरत एवावधारितं भवतः ।
तूष्णीं क्रियतामस्माच्छ्रोष्यसि कार्यं प्रतीहारात् ॥ ८३३ ॥
यूयं कुटुम्बमध्ये क्व गण्यते गोत्रपुत्रसामान्य[2]म् ।
आदाय संविभागं गृह[3] एव स्थीयतां यथासौख्यम् ॥ ८३४ ॥
अभ्यन्तरव्यया[4]र्थं प्रविलब्धो यो मया महाद्रङ्गः ।
तत्रा[5]पि तेऽनुबन्धो नो जाने किं करोमीति ॥ ८३५ ॥
प्रथमत[6]रमेव कल्पितमनन्यहलजीवनं प्रदेशस्थम् ।
अद्यापि ते न जा[7]तं प्रयोगिनां पश्य मन्थरताम् ॥ ८३६ ॥
एवंप्रायैरनुदिनलाभोदयमोहकारिभिर्वचनैः ।
फलशून्यैरनुजीवी प्रतारितः कः कियत्कालम् ॥ ८३७ ॥
एतद्विषये[8] नैपुणमत्र तु भूमिज्ञ[9]तां समाश्रित्य ।
मुखरतया कथयामो जड[10]मतिसामाजिकोचितं किंचित् ॥ ८३८ ॥

---

१ 'णे' इति मु० पा० । २ 'न्याः' इति मु० पा० ।
३ 'मटन इव स्थीयतां यथासौख्यम्' इति ब० पा० ।
४ 'थैन विलब्धो यो महांस्तुङ्गः' इति मु० पा० ।
५ 'अत्रापि न न वचो मे' इति मु० पा० ।
६ 'प्रथमं चरमं विकल्पितमन्यापि कलजीवनप्रदेशस्थम्' इति मु० पा०
७ 'यातं नियोगितानां मद्न्तरताम्' इति मु० पा० ।
८ 'मे' इति मु० पा० । ९ 'मौरुतां' इति मु० पा० ।
१० 'जडमिव' इति मु० पा० ।

समा[1]श्रयः षडात्मा शारीरस्त्रिःप्रमाणपरिमाणः ।
सत्त्वाधि[2]क्याज्ज्येष्ठो व्यस्तमनस्तैस्त्रिभिर्निष्पाद्यः ॥ ९३९ ॥
सुकुमा[3]राविद्धक्रिय उपरंजकरंजितो विविधनृत्तः ।
आदे[4]यहेयमध्येभावैः सम्पादितः प्रयोगोऽयम् ॥ ९४० ॥

(मन्दा[5]नितकम्)

गम्भीरमधुरशब्दं परिर[6]ञ्चितगीतविविध[7]भंगयुतम् ।
दर्शयतो[8] वैचित्र्यं न[9] भ्रष्टो वादकस्य लयकालः ॥ ९४१ ॥
अप[10]रित्यक्तस्थानकरणकाकुव्यंजितस्फुटार्थपदम् ।
अभिरामाविश्रान्तं पठितं निरवद्य[11]मखिलभावयुतम् ॥ ९४२ ॥
नियमितदीपनश[12]मनं द्रुतमध्यविलम्बिता[13]लसंयुक्तम् ।
रसवत्स्वरोपपन्नं कृ[14]तसाम्यं साधुगातृभिर्गीतम् ॥ ९४३ ॥
प्रकृतिविशेषावस्थाप्रतिपादकवेषरचनसामग्र्या ।
अनुकर[15]णमभ्यतीतं सिद्धिद्वयसम्पदाधा[16]रम् ॥ ९४४ ॥

---

१ 'समाश्रयः स महात्मा सशरीरस्त्रिः प्रमाणपरिमाणे' इति मु० पा० ।
२ 'यत्नाद्विलोक्य ध्रष्टो' इति मु० पा० ।
३ स्वर्गमाराधिक्यकियद्' इति मु० पा० ।
४ 'आदाय त्वममर्त्यैर्भावैः' इति मु० पा० । ५ मुद्रितपुस्तके नास्ति ।
६ 'बृंहित' इति मु० पा० । ७ 'मङ्ग' इति मु० पा० ।
८ 'ते' इति मु० पा० । ९ 'तद्रथवादकस्तलकालः' इति मु० पा० ।
१० 'अविभक्तनद्यानस्य काकुपरस्यास्फुटापदम्' इति मु० पा० ।
११ 'निरवद्यभाषासु ॥' इति मु० पा० । १२ 'ग' इति मु० पा० ।
१३ 'तानलययुक्तम्' इति मु० पा० ।
१४ 'तत्साम्यं सादिभिर्विहितम्' इति मु० पा० ।
१५ 'अभिनयकरणे नीता' इति मु० पा० । १६ 'धा' इति मु० पा० ।

भरत[1]सुतैरुपदिष्टं क्षितिपतिनङ्गषावरोधनारीणाम्[2]।
[3]मन्ये ता अपि नाद्ये शोभामन्दोहमीदृशं[4] नापुः ॥ ९४५ ॥
[5]सुश्लिष्टसन्धिबन्धं सर्वत्र सु[6]वर्णयोजितं सुभ[7]गम्।
निपुणपरीक्षकदृष्टं राजति रत्नावलीरत्नम् ॥ ९४६ ॥
एवंविधगुणकथन[8]प्रसंगिनि विभाविताकनृ[9]तनये।
पठति स्मार्यामन्यः स्तुतिविषयमुपागतां प्रसङ्गेन ॥ ९४७ ॥
'संग्रामादनपसृतिः प्रेक्षाभिज्ञा सुभाषि[10]ताभिरतिः।
आस्फोटनाभियोगः कुलविद्या राजपुत्राणाम्' ॥ ९४८ ॥
एतद्वस्तुनि या[10]ते श्रुतिमार्गं नृपतिनन्दनो रमतः।
आरब्ध[11]कथाच्छेदकमाखेटकवर्णनं चक्रे ॥ ९४९ ॥
चललक्ष्यवेधकौशलमश्वप्रजवे स्थिरासनाभ्यसनम्।
भूमिविभागज्ञानं भवंति मृगयाभियोगेन ॥ ९५० ॥
वहति जवेन तुरंगे निविडस्थितपादकटकपादाग्रः।
तिर्यग्विनिहितकायो निम्नोन्नतमग्रतो भुवः पश्यन् ॥ ९५१ ॥

---

१ 'नवसुरतै' इति मु॰ पा॰।
२ 'अनुषावबोधकाराणाम्' इति मु॰ पा॰।
३ 'ता अपि नाये सर्वाः' इति मु॰ पा॰। ४ 'सा' इति मु॰ पा॰।
५ 'सा' इति मु॰ पा॰। ६ 'सत्यानसुवर्णयो...' इति मु॰ पा॰।
७ 'सुतराम्' इति मु॰ पा॰।
८ 'नं यसदादिविभाभितार्थां तं पतये' इति मु॰ पा॰।
९ 'वना' इति मु॰ पा॰। १० 'जाते स्तुतिभाजां'।
११ 'आरभ्य कथा...' इति मु॰ पा॰।

यावन्प्राणं धावत्याकुलिते विशृङ्खभिर्भीत्या ।
गोचरपतिते जीवे लघुक्रियः चिरति मार्गणं धन्यः ॥ ८५२ ।
(मंदाक्रान्तकम्)

मूले स्थितस्य निभृतं मृगयुभिरुच्चाय्य ढौकितं निकटे ।
पातयतो मृगमुत्प्लुतमव्यपदेश्यं सुखं किमपि ॥ ८५३ ॥
गीतश्रवणोत्कर्णं निश्चलतृणकवलगर्भमुखहरिणम् ।
उपवेशितमस्पन्दं स्पृहणीया एव टङ्कंति ॥ ८५४ ॥
दावानलसंतापान्निर्यातं गहनवीरुधोऽभिमुखम् ।
यो निरुणद्धि स धन्यः सूकरमेकप्रहारेण ॥ ८५५ ॥
घनकचोदरसुप्तं समुपेत्य स्वैरमकृतपदशब्दम् ।
व्याधवर एव कुरुते निर्जीवं हेलया शशकम् ॥ ८५६ ॥
इति विदधति सैंहभटावाखेटकशक्तिलाघवश्लाघाम् ।
हृदयागतामगायत्प्रसंगतो गीतिकामपरः ॥ ८५७॥
'आस्तां व्यापाररसः प्रवर्तिता संकथापि मृगयायाः ।
अन्तरयति तन्मनसामाहारादिक्रियोचितं कालम्' ॥ ८५८ ॥
अवधार्य गीतिकार्थं दानं प्रति धननियुक्तमभिधाय ।
उत्तस्थौ समरभटो मंजरिकां समवलोकयन्प्रेम्णा ॥ ८५९ ॥
गत्वाथ स्वावसथं निर्वर्तितभोजनादिकर्तव्यः ।
मंजरिकाकृष्टमना अभिदध्यौ सचिवसन्निधावेवम् ॥ ८६० ॥
भ्रूभंगस्मितवीक्षितमृदुवक्रवचोऽगद्वारगमनेषु ।
कुसुमप्रहरण एको युगपद्विहिताश्रयः कथं तस्याः ॥ ८६१ ॥
सुन्दोपसुन्दनाशः फलमात्मभुवस्तिलोत्तमासृष्टेः ।
अनङ्गतये तां सृजता किं दृष्टं सुरहितं तेन ॥ ८६२ ॥

सुमनोभिः परिकरिता मृगशावकतरलचक्षुषस्तस्याः ।
कामोचितफलहेतुर्दहमूर्तां दीर्घिका वेणी ॥ ८ ६ ३ ॥
कमलमिव वदनकमलं पिबंति तस्यास्त्रिविष्टपभ्रष्टाः ।
मदलिकमपेतदोषं सविभ्रमं मधुमदाताम्रम् ॥ ८ ६ ४ ॥
यः शैलेन्द्रनितम्बं सुरताश्यै सेवते तपोनिरतः ।
स्पृहयति सोऽपि नितम्बं सुरताश्यै समवलोक्य तन्वंग्याः ॥ ८ ६ ५ ॥
त्रिकरो मध्यविभागो बाह्वोर्युगलं करद्वयोपेतम् ।
जनयति तदपि मृगाक्षी सहस्रकरतोऽधिकं तापम् ॥ ८ ६ ६ ॥
सा स्रग्धरा सुवदना प्रहर्षिणी सैव सैव तनुमध्या ।
न करोति कस्य विस्मयमिति रुचिरा मंजुभाषिणी सैव ॥ ८ ६ ७ ॥
अनुकुर्वत्या कन्यां तया तया नायकस्तया दृष्टः ।
येन जरत्त्र्यम्बकनौ धनुषः स्पृष्टा दृशार्धबाणेन ॥ ८ ६ ८ ॥
रूपं यौवनचिंचितमनंगविकृतानि नाट्यदीप्तानि ।
शमिनामपि शमगर्वं मुष्णान्त्यविकल्पितं तस्याः ॥ ८ ६ ८ ॥
दग्धेऽपि वपुषि भीतिं न विमुंचति नीललोहितसकुत्याम् ।
तत्क्षेत्रे वसति यतः प्रमदारूपेण शंबरध्वंसी ॥ ८ ७ ० ॥
यदि वः परलोकमतिः शृणुत श्रेयस्तपोधना मत्तः ।
उत्सृज्य यात तूर्णं वारवधूदूषितं स्थानम् ॥ ८ ७ १ ।
चिरमपि विकल्प्य निश्चितिरियमेव स्थाप्यते न गतिरन्या ।
तन्निर्माणे जाता लावण्यमयाः कणा विधेरणवः ॥ ८ ७ २ ॥
आसाद्य समुच्छ्रायं तस्याः स्तनयुगलमतिहतप्रसरम् ।
क्षपयति यज्जनमेवं कः स्पृह्यति तद्विवेकवान्पतितम् ॥ ८ ७ ३ ॥

स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः ।
शान्तात्मनापि विहितं विश्वसृजा गौरवं यस्य ॥ ९७४ ॥
स्मरणाद्यस्योत्पत्तिः सुमनस इषवोऽबलास्तथा शक्तिः ।
सोऽपि व्यंगः प्रहरति धातुरहो चित्रमाचरितम् ॥ ९७५ ॥
तिष्ठन्त्वन्ये दृष्ट्वा सारं जगतस्तदंगनारत्नम् ।
नष्टपठनावधानो भवति ब्रह्मा सनिर्वेदः ॥ ९७६ ॥
यदि पश्यति तां शर्वस्तदपररामासमागमाद्विमुखः ।
निन्दति मूर्धनि सोमं स्मराग्निसंधुक्षणं शरीरं च ॥ ९७७ ॥
केशव इह संनिहितः सापि मनोहारिरूपसम्पन्ना ।
तद्वक्ष्यवनभुवं कथमुज्झति सैंधवी शंकाम् ॥ ९७८ ॥
वदयति न पंडितानां कथमात्मनि कौतुकं गजेन्द्रगतिः ।
यन्नववयसां पुंसां विना क्रियायोगमुपसर्गः ॥ ९७९ ॥
श्रुतिकुवलयमोक्षणतां कुवलयतां वा विलोचनं यायात् ।
हरिणदृशो यदि न स्यात्कनकोज्ज्वलकेसरं मध्ये ॥ ९८० ॥
ललनास्तदतुल्यतया पुरुषा अपि तदुपभोगविरहेण ।
गच्छन्ति शोषमनिशं प्रकृतिद्वयवर्जिताः स्वस्थाः ॥ ९८१ ॥
दुर्वृत्तयोर्न वृत्तं श्लाघास्पदमेति तत्पयोधरयोः ।
यौ धृत्वामलमूर्तिं मध्ये हारं जनक्षयं कुरुतः ॥ ९८२ ॥
भूमण्डलेऽत्र सकले नातः परमपरमद्भुतं किंचित् ।
नो जाता यदपार्था कृशोदरी धार्तराष्ट्रयातापि ॥ ९८३ ॥
कृश एष मध्यदेशस्तन्व्या नाहार्यमण्डनं वोढुम् ।
शक्त इति कृतं विधिना रोमावलिभूषणं सहजम् ॥ ९८४ ॥

साकंपोऽधर ईक्षणयुगलस्याधीरता भ्रुवोर्भंगः ।
तन्वंग्या बलमीदृग्जयति जगत्तदपि निःशेषम् ॥ ९८५ ॥
वहतु नितम्बः स्थूलो रशनां हारं च कुचयुगं पीनम् ।
तद्बाहुमृणालिकयोः सापायं कटकयोजनमयुक्तम् ॥ ९८६ ॥
बहूलोपायाभिज्ञा गुणविषये सततमाहितप्रीतिः ।
बलिनः स्थापयति वशे करभोरुर्विग्रहेण मृदुनैव ॥ ९८७ ॥
इति तत्स्तुतिमुखरमुखे राजसुते मीनकेतुनाकुलिते ।
समुपागता प्रगल्भा मंजरिकाचोदिता दूती ॥ ९८८ ॥
सा सप्रणतिः पुरतः सुमनस्ताम्बूलपटलकं निदधे ।
व्यज्ञापयच्च तदनु स्वावसरे सहचरीकार्यम् ॥ ९८९ ॥
मुररिपुनाभिसरोरुहमवतंसीकर्तुमीहते मूढा ।
नक्षत्रराजमण्डलमिच्छति वियतः समादातुम् ॥ ९९० ॥
निश्चेतनाभिकांक्षति पीयूषं त्रिदिवसद्मनामशनम् ।
अभिलषति शयनमुष्णे नवचन्दनपल्लवास्तरणे ॥ ९९१ ॥
विदधाति पारिजातकसुमनोनिर्व्यूहधारणश्रद्धाम् ।
दुर्व्यवसिता जिघृक्षति नारायणवक्षसो रत्नम् ॥ ९९२ ॥
अनियतपुरुषस्पृश्याः पापा वयमन्यथा क्व हीनकुलाः ।
क्व च यूयमिन्द्रकल्पा अनल्पमनसो गुणाभरणाः ॥ ९९३ ॥
दुष्कृतेः प्रकृतिरियं तस्य तु दग्धात्मजन्मनः कापि ।
अगणितयुक्तायुक्तो लगयति चेतो यदस्थाने ॥ ९९४ ॥
या हसति सरोजवतीं रसान्विता सहजरागरक्तेति ।
ध्यानधिय आत्मवृत्तिं निन्दत्येकच पुरुष आसक्ताम् ॥ ९९५ ॥

स्निग्धेति नाभिनन्दति जन्मशतेनापि सर्पिषो धाराम् ।
पंचाचयूनगतिं नानर्थकरमणसंगतां स्तौति ॥ ९९६ ॥
न स्तौति चन्दनलतां भुजंगपरिवेष्टितां रसार्द्रेति
न शृणोति कीर्त्यमानां स्वप्नेष्वपि मदनमूर्छितां मत्स्रीम् ॥ ९९७ ॥
विद्वेष्टि करणमध्ये रसनां ताम्बूलरागरक्तेति ।
शंसति मतिं मुमुचोरविशिष्टां शशवृषाश्वपुरुषेषु ॥ ९९८ ॥
नो वक्ति मनुते रम्भां नलकूवरमभिसृतेति कामार्ताम् ।
गर्हति च देवगणिकामनुरक्तामुर्वशीं पुरूरवसि ॥ ९९९ ॥
हरति मनो नो ह्रियते रंजयति न रज्यते कदाचिदपि ।
गृह्णाति चित्रचरितैरुपकृतिभिर्गृह्यते न वक्त्रोभिः ॥ १००० ॥
प्रेममयीवाभाति प्रेम तु नाम्नैव केवलं वेत्ति ।
कंटकिता भवति रते रतभोगसुखं शृणोति लोकात्तु ॥ १००१ ॥
कुरुते विविक्तचाटून् शिल्पविशेषेण न तु रसावेशात् ।
अनभिज्ञा मदनरुजामाकल्पकवेदनां समावहति ॥ १००२ ॥
बालैवार्जवरहिता स्फुरतीश्वरमेत्य चन्द्रलेखेव ।
हृतधनपतिमाहात्म्या प्रवृत्तिरिव रक्षसां पत्युः ॥ १००३ ॥
नरनाथ किं ब्रवीमि त्रिपुरान्तकनयनदाहदग्धोऽपि ।
दुःसाध्यसाधनग्रहमुत्सृजति न पापकुसुमास्त्रः ॥ १००४ ॥
लब्ध्वर्शनावकाशं संप्राप्य यतो दुरात्मना तेन ।
चिरसम्भृतकोपेन प्रारब्धा सापि हन्तुमिषुधारैः ॥ १००५ ॥
(कुलकम्)

अवहेलयैव भवता संस्पृष्टा येन वेत्रदण्डेन ।
जातः स एव तस्या अनन्यभवमार्गणः प्रथमः ॥ १००६ ॥

विज्ञानार्जितदर्पो निभृतं हसितः समानशिल्पाभिः ।
त्वयि सक्तदृशः सख्या विसंष्ठुले नाट्यनिर्माणे ॥१००७॥
अवधीर्याचार्यरुषं भरतोदितदोषकरणसम्भूताम् ।
विस्तारितः प्रयोगस्त्वदवस्थितिवाञ्छया तन्व्या ॥१००८॥
भग्नेऽपि प्रेक्षणके तदन्तरभूमिकाश्रयावस्थाः ।
ग्टह एव निरवसानं वितनोति न नाट्यधर्मेण ॥१००९॥
ध्यायत एकं पुरुषं परमात्मविदः शशंस या न पुरा ।
ताननुकुरुते सैव ध्यायन्ती त्वां महापुरुषम् ॥१०१०॥
गतमेवमेवमासितमालोकितमेवमेवमालपितम् ।
इति विस्मृतान्यकार्या स्मरति कृशाङ्गी त्वदीयलीलानाम् ॥१०११॥
नलकूवरो वराको रतिरमणे रमण एव किं तेन ।
अनिरुद्धोऽपि न बुद्धो विदग्धविहितासु सुरतगोष्ठीषु ॥१०१२॥
न जयन्तोऽनन्तगुणो न कुमारो मारकर्मणोऽबाह्यः ।
येन समतां नयामस्तमिति सखी वहति मानसं क्लेशम् ॥१०१३॥
आगतमागच्छन्तं पुरतः पार्श्वे प्रसन्नमथ कुपितम् ।
पश्यति भवन्तमेकं सङ्कल्पनिवेशितं बाला ॥ १०१४ ॥
रुच्यः शान्तो हृद्यः सुभगः सुखदो मनोहरो रमणः ।
दृष्टः स्वामी दयितः प्राणेशः केलिकरणनिपुण इति ॥१०१५॥
मुक्तान्यसमारम्भा वरतनुरनुपप्लुतेन चित्तेन ।
जपति समीहितसिद्धौ त्वद्वादशनामकं महास्तोत्रम् ॥१०१६॥
तामेव गच्छ यस्यामासक्त्य विलम्बितोऽसि गतलज्ज ।
वेलामियतीमलमलमेतैरधुना शठानुनयैः ॥ १०१७ ॥

वक्ष्यामि सापराधं क्रोधस्फुरदधरमञ्चितभ्रूकम्।
इति विदधाति सुमध्या हृदयेन मनोरथावृत्तिम् ॥१०१८॥

(मन्दानितकम्)

उत्सहते न द्रष्टुं प्रतिबिम्बितमाननं कुतः शशिनम्।
का संकथा मृणाले क्षिपति भुजौ सर्वतो व्यथिता ॥१०१९॥
दूरे कदलीदण्डा ऊर्वोरपि न सहते समाश्लेषम्।
करसम्पर्कादिसुखी विश्राम्यति पल्लवेष्विति विरुद्धम् ॥१०२०॥
अयि मञ्जरि सैव त्वं विदग्धजनमण्डिता पुरी सैव।
कुसुमायुधः स एव व्यसनं कुत एतदायातम् ॥१०२१॥
यस्याः कामः कृपणो रागाकृष्टिस्तृणोपलप्रख्या।
सापि गता भूमिमिमां जीवन्त्या नेष्यते किमिह ॥१०२२॥
अभियोगशिक्षितानामशिक्षितानां च मदनचेष्टानाम्।
सुतनु विशेषग्रहणे सामर्थ्यं तद्विदामेव ॥१०२३॥
व्यथयन्नपि सच्छायः परिजनचिन्ताकरोऽपि रमणीयः।
आधत्ते त्वयि लक्ष्मीमभिनवरागाश्रयो रागः ॥१०२४॥
एकः स एव जातो भुवनेऽस्मिन्नसमसायकस्पर्धी।
तेन शशिबिम्बफलके स्वजन्मना लेखितं निजं नाम ॥१०२५॥
पादस्तेन सलीलं विन्यस्तः सुभगमानिनां मूर्ध्नि।
सौभाग्ययशःकुसुमं धनपतिसूनोः कदर्थितं तेन ॥१०२६॥
नरवञ्चनपटुबुद्धिः सम्पादितकपटचाटुसङ्घटना।
त्वमपि विलासिनि नीता गतिमियतीं येन सुभगेन ॥१०२७॥

(अन्तर्विशेषकम्)

तद्वद् तस्य स्थानं यतामहे कार्यसाधनायाशु ।
कुर्वत एव हि यत्नं भिषग्जनाः कृच्छ्रसाध्यरोगेऽपि ॥ १०२८ ॥
इति गदिते सख्या सा तदभिमुखं चक्षुषी समुन्मील्य ।
वितरति कृच्छ्रेण चिराद्भावितमक्लिष्टहुंकारम् ॥ १०२९ ॥
का पुरुषार्थसमीहा द्योतयतः शर्वरीं शशाङ्कस्य ।
तर्पयतां भुवमखिलां सलिलमुचां कोऽभिकांक्षितो लाभः ॥ १०३० ॥
मण्डयितुं वियदुदयति पुरुहूतधनुर्विनैव फलवाञ्छाम् ।
अनपेक्षितात्मकार्यः परहितकरणग्रहः सतां सहजः ॥ १०३१ ॥
प्रायेण यन्निदानं तत्सेवनमुपशमाय रोगाणाम् ।
स्मरमान्द्यं तु यदुत्थं तदेव खलु भेषजं यतस्तस्य ॥ १०३२ ॥
तेन स्पृहयति सुतनुस्त्वत्पादयुगाङ्करेणुसङ्गतये ।
आशीर्विषयोपेते सम्भोगसुखोदये तु नाकाङ्क्षा ॥ १०३३ ॥
(सन्दानितकम्)

प्रमदमुपैति मयूरी परमं शब्देन वारिवाहस्य ।
अनिमिषविलोकितेन प्राप्नोति झषी कृतार्थतामेव ॥ १०३४ ॥
न वृथास्तुतिमुखरतया न च युष्मल्लोभनाभियोगेन ।
विदधामि तद्गुणाख्यां स्वरूपमात्रप्रसङ्गेन ॥ १०३५ ॥
सद्भावबद्धमूले स्मितदृष्टिभ्रूविकारपल्लविते ।
सेवन्ते हृद्यरसां रागतरौ मञ्जरीं धन्याः ॥ १०३६ ॥
तिष्ठतु तदंगसङ्गो विलोकिता येन झगिति वरगात्री ।
तस्यान्यो युवतिजनः प्रतिभाति मनुष्यरूपेण ॥ १०३७ ॥
सकृदपि यैरनुभूतस्तत्तनुपरिरम्भसुखरसास्वादः ।
विद्धि नराधिप तेषां दूरीभूतं प्रजाकार्यम् ॥ १०३८ ॥

आस्था का खलु तस्या विषयग्रहदुर्बलेषु पुरुषेषु ।
यस्या विलासजालकपतितः शकुनायते कपिलः ॥ १०३९ ॥

दग्ध्वा पुनरपि दग्धो नूनमनङ्गो हरेण तां तन्वीम् ।
दृष्ट्वापि येन तिष्ठामि निराकुलः स्वस्थवृत्तेन ॥ १०४० ॥

अथ विरतोक्तौ तस्यामुल्लासितमानसे च नृपतौ च ।
कश्चिदगायद्गीतिं स्मृतिमङ्गतिमागतां प्रसङ्गेन ॥ १०४१ ॥

'अन्योन्यगाढरागप्रवलीकृतचित्तजन्मनोर्यूनोः ।
कालात्ययो मनागपि समागमानन्दविघ्नकरः' ॥ १०४२ ॥

श्रुत्वा सिंहभटसुतः प्रियाप्रियां गीतिमाश्रितप्रथमम् ।
निजगाद चारुभाषिणि गीतिकया समयसम्मतं कथितम् ॥१०४३ ॥

अभिनन्द्य सा तथेति प्रययौ प्रमदावती निजं भवनम् ।
अकरोच्च विदितकार्यां युक्तेऽवसरे मनोरमां गणिकाम् ॥१०४४॥

अथ सा कृतसङ्कल्पा सत्वरमादाय रुचिरविच्छित्तिम् ।
आसाद्य नृपनिशान्तं विवेश सञ्चारिकासहिता ॥ १०४५ ॥

विहितनमस्कृतिरासनमधितष्ठौ नायकेन निर्दिष्टम् ।
पृष्टे च देहकुशले विनयान्वितमभ्यधाद्दूती ॥ १०४६ ॥

श्रीमन्नद्य श्रेयः सम्पन्ना गुरुजनाशिषोऽशेषाः ।
अद्य मदनः प्रसन्नो भाग्यचयैरद्य परिणतं फलतः ॥ १०४७ ॥

अद्य जननी प्रसूता सौभाग्यगुणोदयोऽद्य निष्णातः ।
त्वयि वितरति सन्देहं निरामयप्रश्नभारतीं तस्याः ॥ १०४८ ॥

(सन्दानितकम्)

उत्कलिकाकुलमनसामुद्रिक्तरिरंसयाभिभूतानाम् ।
औदासीन्यं भजतां समा यतो भवति नाडिका यूनाम् ॥ १०४९ ॥

धृतसुमनःशरधनुषा सहायवांस्तिष्ठ दयितया सार्धम् ।
यामो वयं न राजति विजनस्थितिमिथुनसन्निधावपरः ॥ १०५०॥
एषा नृत्यश्रान्ता मदनेनायासितातिसुकुमारा ।
त्वमपि रतिसमरशूरः स्वर्गभुवः सन्तु कुशलाय ॥ १०५१ ॥
यावद्यावदशक्तिं प्रथयति ललना हि मोहनाक्रान्ता ।
तावत्तावत्पुंसामुत्साहः पल्लवान्समुत्सृजति ॥ १०५२ ॥
इति शून्यीकृतवेश्मनि हरति शनैः सहजमंशुकं तस्मिन् ।
दर्शितसाध्वसलज्जा जगाद सा किं करोषीति ॥ १०५३ ॥
अयि मुग्धे तत्क्रियते पुरुषार्थचतुष्टयस्य यत्सारम् ।
इति निगदितसस्मेरः स्मरविधुरित आततान रतिकलहम् ॥
१०५४ ॥
नानासुरतविशेषैराराध्य चकार भुक्तसर्वस्वम् ।
गणिकासौ राजसुतं त्वगस्थिशेषं मुमोच नातिचिरात् ॥ १०५५ ॥
तद्यन्मयोपदिष्टं कामिजनार्थाप्तिकारणं तेन ।
महतीं समृद्धिमेष्यसि कामुकलोकाहृतेन वित्तेन ॥ १०५६ ॥
इत्युपदेशश्रवणप्रबोधतुष्टा जगाम धाम स्वम् ।
मालत्यपगतमोहा विकरालापादवन्दनां कृत्वा ॥ १०५७ ॥
काव्यमिदं यः शृणुते सम्यक्काव्यार्थपालनेनासौ ।
नो वञ्च्यते कदाचिद्विटवेश्याधूर्तकुट्टनीभिरिति ॥ १०५८ ॥

कुट्टनीमतं काव्यं समाप्तम्[1] ॥

---

[1] This colophon occurs also after verse 1054 in the Society's MS. after which occurs the line कृतिरियं भट्टदामोदरगुप्तस्य महाकवेरिति । This is followed by the rest of the text as printed here in a later Newari hand.—*Ed.*

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

With the issue of this Notice all previous prices and price-lists are cancelled.

CALCUTTA,

*1st January*, 1941.

The publications or information about them are obtainable from the Royal Asiatic Society of Bengal, No. 1 Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & CO., 46 Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13 Rue Jacob, Paris, VI^e.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14 Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO., LD., 3 Esplanade, East, Calcutta.

MESSRS. THE MOORE COTTRELL SUBSCRIPTION AGENCIES, New York, U.S.A.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Royal Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Royal Asiatic Society of Bengal".

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India, books are supplied by V.-P.P.

